# संस्कृत-गद्य-लेखावली

लेखकः

डॉ।। बा. श्री. रामकृष्ण रावः

सुरभारती प्रकाशनम्

बेंगलूरु - ५६० ०८५

# SAMSKRITA GADYALEKHAVALI

By
Dr. B. S. Ramakrishna Rao

Foreword
Prof. Gargeshwari Venkatasubbaiah

SURABHARATHI PRAKASHANAM
BANGALORE - 560 085

**SAMSKRITA GADYALEKHAVALI** - A collection of Sanskrit Articles by **Dr. B. S. Ramakrishna Rao.,** Honorary Professor, Chinmaya International Foundation, Veliyanad, Ernakulam Dist. Cochin - 682 319 (Kerala)
Pages – 80

Price : **Twentyfive Rupees**



Copies : 500

First Edition : October 1998

Published by
**Surabharathi Prakashanam**
115/17, V Main Road
Poornaprajna Lay Out
Banashankari III Stage
Bangalore - 560 085

Printed by :
**Parimala Mudranalaya**
Hanumanthanagar, Bangalore-19
Ph. : 625516

DTP typeset courtesy
**Sri Atul Goradia**
Siddhi Printers, 13-14, Khetwadi,
13th Road, Mumbai-400 004

# FOREWORD

Dr. B. S. Ramakrishna Rao is well known to the Samskṛta knowing public, as he has been working earnestly for the cause of Samskṛta for over 25 years, in various institutions - The National College, Bangalore, Akhila Karnataka Samskṛta Parishat, Bharatiya Vidya Bhavan - and now at Chinmaya International Foundation, Cochin. So, when he requested me to write a foreword to this book, I felt that it was not necessary, as he required no introduction to the readers. But, even so, I agreed to his request, as I did not want to let go the opportunity to express my appreciation for his good work and wish him well.

Dr. Rao has read papers at many Seminars and Conferences, and also contributed articles to various periodicals, in Samskṛta, English and Kannada. The present book is a collection of three unpublished papers in Samskṛta and seven articles, which were published in the issues of संविद्, one of the journals of Bharatiya Vidya Bhavan.

In the first paper, the author expresses his great distress at the present condition of Samskṛta education, traces the causes for the gradual decline in the importance of the language and gives a plan of action to improve its status. He deplores the fanciful suggestions for "simplifying Samskṛta" to make it easy for learners and

states that many of these suggestions would deform the language. He points out that use of simple words, particularly those which are also used in one's mother tongue in the same sense as in Samskṛta (समसंस्कृत), avoidance of unnecessary compound - formation (समास) and such other means will serve the purpose.

The second paper, "संस्कृते पत्रकारिता" is about journals and journalism in Samskṛta. The author traces the growth of Samskṛta journalism since 1866 and states that over 500 newspapers and journals in Samskṛta were published since then in various parts of the country. The achievement of these papers and their speciality vis-a-vis other language papers are mentioned. The paper ends with a discussion of the difficulties faced by the Samskṛta papers and means of overcoming them.

The third paper describes the life and achievements of two illustrious freedom fighters from Karnataka - Karnad Sadashiva Rao and Ranganatha Ramachandra Divakara.

"भगवत्सङ्कल्पः" and "सा........." are two short stories translated from English. The first one is of three brothers, in their sixties, who are visiting their village, Mukundapuram in Kerala, after a long time, with the object of selling their ancestral palatial home where they were born and brought up - to a rich person from a Gulf-country, for a tidy sum. When they were on their way, they nostalgically remembered their happy

childhood days in the village and its serene surroundings. After reaching the place, they go in the evening to the temple, where the idol of Lord Krishna had been installed by one of their ancestors. Though the temple had become dilapidated, the brothers feel the twing presence of the Lord and are transformed. They decide not to sell the ancestral home, but to renovate it and spend the rest of their lives there peacefully, serving the Lord. The story is moving and the characterisation is fine.

The second story, "सा....." narrates how a young businessman, harbouring amorous thoughts about a lovely salesgirl in her twenties, was made to mend his ways by her dignified behaviour, when she called on him at his office. He exclaims within himself "She represents our culture, not I, I am thankful to her for purging my mind of wicked thoughts.

"अतिथिः पाचकोऽथवा" and विदेशे केशकर्तनम्" are two skits about the author's experiences, during his stay in Mexico. They are full of banter and light sarcasm. The readers will find them entertaining.

श्रीगुरुकृपातरङ्गिणी is an appreciative review of a Samskṛta महाकाव्य of the same name, composed by a contemporary Ṣamskṛta and Kannada poet, Vidwan K. S. Bhaskara Bhatta of Bhimanakona in Karnataka.

In दशमं मिलनं यावत्, which was written, a little before the 10th विश्व संस्कृत सम्मेलनम्, the author traces the history

of Samskṛta Sammelanas in India and abroad, during the last 50 years.

In the last article, "इतिकर्तव्यतास्माकम्", Dr. Rao points out that Samskṛta journalists also have a duty to perform in the great endeavour of nation-building and gives many suggestions regarding the course of action.

The book is, thus, both thought - provoking and entertaining. I trust it will receive a warm welcome from the readers. I also hope that the author will publish his other writings too, in book form, in the near future.

May Lord Ganesha sustain him to work for the cause of Samskṛta, for a long time !

बहुधान्य वत्सरः,
गंणेशचतुर्थी,
25-8-1998.

**Prof. Gargeswari Venkatasubbiah**
'Actuary', No. 20. Ganesha Dhama
2nd Cross, 9th Main, R. M. V. Extension
Bangalore - 560 080

# इदमत्र निवेद्यते

भारतीयविद्याभवनस्य मेक्सिको-केन्द्रात् प्रतिनिवृत्तोऽहं मुम्बय्यां संविन्नामकसंस्कृत-त्रैमासिकपत्रिकायाः संम्पादनकर्मणि नियुक्त अभवम् । तदानीं केनापि कारणेन सा पत्रिका अप्रचलन्तीव आसीत् । सर्वप्रथमं तस्याः जीवापनं साम्प्रतिकत्व-समापादनं च मे प्रथमः कर्तव्यः अभूत् । एतदर्थं तथा च पत्रिकायाः वाचनीयतायाः अभिवृद्ध्यर्थमपि मया बहवः नूतनाः स्तम्भाः नवानि अङ्कणानि नानाविधाः लेखाः च विनिवेशिताः । समुचितानां लेखानामभावे वैविध्यसंरक्षणार्थं बधकटित्वेऽपि च मयि स्वयमेव नानाच्छद्मनामभिः पत्रिकाकुक्षिः पूर्यते स्म।

ईदृशे स्वयं स्वीकृते कर्मणि मया विचारविहारः, शिशुगीतानि, हास्यमधु-बिन्दवः, बालकथाः, लौकिकन्यायाः, अन्त्याक्षर्याः कृते सुभाषित-सङ्ग्रहः, सामयिका निबन्धाः, इतिवृत्तानि, लघुकथाः, पुस्तकपरिचयः, एवंरीत्या संस्कृतलेखने लेखनी व्यापारिता । गच्छता कालेन पाठकानां प्रतिक्रियाणां प्रोत्साहकारणात् ईदृशाः लेखाः यावच्छक्ति यथामति च अनुवर्तिताः ।

पाठकप्रवरेषु कानिचन मित्राणि प्रकाशितेषु लेखेषु बहवः पुस्तकरूपेण पुनः प्रकाशनमर्हन्तीति स्वाभिप्रायान् प्राचीकटन् । तत्परिणामत्वेन चास्माभिः संवित्संस्कृतग्रन्थमाला समारब्धा यत्र च प्रामुख्येन अभिनव-साहित्यस्यैव प्रकाशनं स्वीकृतम् । सेयं ग्रन्थमाला इदानीं लोकप्रिया सञ्जातेति प्रमुदितमानसोऽहम् ।

मुम्बयीजीवनेन जुगुप्सितोऽहं सकुटुम्बः स्वनगरं बेङ्गलूरुं प्रतिनिवृत्तः । प्रत्यागमनसमये संवित्पत्रिकायां मया विलिख्य प्रकाशितानां केषाञ्चन लेखानां पुस्तकरूपेण प्रकाशनं विधातुं कृतमतिरभवम् । भारतीयविद्याभवनस्य अधिकारिभिः सह वार्तालापः प्रवर्तते स्म एव । तथापि नूतनशालारम्भसमयः संप्राप्त इति सत्वरं स्वनगरं समागन्तव्यमभूत्।

सिद्धि मुद्रणालयस्य स्वामिभिः श्री अतुल गोराडिया महोदयैः संस्कृत विषये, विशिष्य च ममोपरि, महती प्रीतिः महान् आदरः संरक्षितः प्रदर्शितश्च।

तेषां साहाय्यात् ततश्च बेङ्गलूरुनगरे मम चिरकालसुहृद्भिः परिमलमुद्रणालयस्य श्री चिदम्बरय्य महोदयैः तत्पुत्रैः श्री प्रभाकरमहाभागैः अपि प्रदर्शित-प्रोत्साहकारणात् इदानीं मम केचन लेखाः प्रकाश्यमानाः सन्ति । भारतीयविद्याभवनं प्रति च अहं ऋणी अस्मि तस्य च साहाय्यहेतोः।

अग्रिमेषु पृष्ठेषु अद्भुतं किमपि नास्तीति जानाति प्रकृतलेखकोऽपि। परं संस्कृतक्षेत्रे वाचनीयतां वर्धयितुं सरलसंस्कृतभाषया समुपनिबद्धानां लघुलघूनां लेखानां गद्यानां पद्यानां नाटकानां हास्यकणिकानां तथा च इतरभाषास्विव विविध-सामयिक-निबन्धानामपि आवश्यकता अस्तीत्येव मन्यमानोऽहं ग्रन्थप्रकटने आत्मानं व्यापारितवानस्मि । ईदृशपुस्तिकानां वाचनेन संस्कृतस्य प्रचारः भवतीति दृढोऽस्ति मे विश्वासः। संस्कृते अपि एवं रूपाणि कृत्यानि सम्भवन्तीति द्योतयितुं केवलं मे प्रयासः प्रवर्तते ।

संस्कृतगद्यलेखावली इत्यस्मिन् लघुग्रन्थे मदीयलेखेषु प्रातिनिधिकत्वेन केवलं दशलेखाः सङ्कलिताः सन्ति । एतेषु बहवः संवित्संस्कृतपत्रिकायां पूर्वमेव प्रकाशिताः । नानावसरेषु, लिखिताः लेखाः सामयिकास्सन्ति । 'भवन्स् जर्नल्' पत्रिकायाः सम्पादकवरः श्री वि. शिवरामकृष्णन् महोदयः 'सा.......' भगवत्सङ्कल्पः इति द्वयोः लघुकथयोः मूललेखकोऽस्ति । भाषान्तरं कर्तुमनुमतिः प्रोत्साहश्च शिवरामकृष्णमहोदयैः प्रदत्तः । तेभ्योऽहमधमर्णोऽस्मि ।

मनीषिणः हितैषिणः वृद्धाः विद्वांसश्च प्रो. गर्गेश्वरि वेङ्कटसुब्बय्यमहोदयाः मम प्रार्थनामङ्गीकृत्य पुरोवाक्यं विलिख्य माम् अनुगृहीतवन्तः । तेभ्यो मे प्रणामाः । वाचकमहाशयाः कृपया साधु पठित्वा स्वाभिप्रायान् मे सूचयित्वा उपकुर्वन्तु । अस्मिन् प्रकाशनकर्मणि यैः मे भूरि साह्यं कृतं तान् सर्वान् सकृतज्ञं मनसा स्मरामि ।

बेङ्गलूरु
1-10-1998

संस्कृतसेवाकर्मणि भवदीयः
बा. श्री. रामकृष्ण रावः

॥ श्रीः ॥

# संस्कृतभाषायाः समुन्नतेः सरलीकरणस्य चोपायाः

'भाषा'- इत्यस्य शब्दस्य **'संस्कृतभाषा'** इत्येव प्रथमः अर्थः भवति । पाणिनिः स्वीये व्याकरणग्रन्थे 'छन्दसि' - 'भाषायाम्' इति शब्दौ प्रयुज्य संस्कृतम् अथवा लौकिकं संस्कृतम् एव भाषाशब्देन व्यपदिशति । सेयं भाषा पाणिनिकारणादेव उत्तरोत्तरं वृद्धिं गता । पाणिनिव्याकरणादेव इयं भाषा न मृता । पाणिन्यनन्तरमेव इतिहास-पुराण-काव्य-शास्त्रग्रन्थाः शतशोऽथ सहस्त्रशः विरचिताः अभूवन् । तदानीमेव संस्कृतं शिक्षणमाध्यमम् अभूत् । देशे सर्वत्र विदेशेषु बहुत्र च अस्माकं साहित्यस्य संस्कृतेः दर्शनानां शास्त्राणां शिल्पानां कलानां काव्यानां कवीनां च प्रचारः प्रसारः संस्कृतादेव अभूत् । सर्वेषां शिष्टानां साधारणभाषात्वेन संस्कृतमेव भारतराष्ट्रस्य एकताम् अखण्डतां समग्रतां च स्थिरीचकार । सतीष्वपि बह्वीषु पाली-प्राकृत-अपभ्रंश-मध्यकालीनभारतीयभाषा-आधुनिकभारतीयभाषादिषु प्रान्तीयभाषासु च संस्कृतस्य स्वीयं किमपि विशिष्टं स्थानं न कदापि लुप्तमभूत्, महम्मदीयानां वैदेशिकानां प्रशासनकाले अपि ।

संस्कृतं कदा वा निखिलजनसाधारणी भाषा, नित्यव्यवहारे च उपयुज्यमाना आसीदिति न कोऽपि इदमित्थं रूपेण वक्तुं प्रभवति । परं देशेऽस्मिन् समग्रशिक्षितजनानां साधारणभाषात्वेन तु संस्कृतं मार्कि गतशताब्दस्य मध्यभागं यावत् आसीदेव इति तु अङ्गीकरणयोग्य एवास्ति अभिप्रायः । १८३५ तमे ख्रिस्तवर्षे लार्ड् टि.बि. मेकाले तथा श्री राजा-राम-मोहन-राय-प्रभृतीनां महापुरुषाणां प्रयत्नानां

परिणामरूपेण भारतस्य सार्वजनिकशिक्षणप्रणाल्यां संस्कृतं स्थानभ्रष्टम् अभूत् यस्मिंश्च स्थाने इंग्लिष् भाषा सार्वभौमत्वं प्रापत् । **अत: वस्तुतो विचार्यमाणे संस्कृतस्य अद्यतनीयानां सकलसमस्यानां मूलम् इंग्लिष्भाषा इंग्लिष्माध्यमेन शिक्षणमेव च वर्तते ।** संस्कृतशिक्षणस्य, न तु संस्कृतभाषाया:, वास्तविको ह्रास: ब्रिटिषप्रशासनकाले प्रारब्ध:, स्वातन्त्र्यप्राप्ते: अनन्तरं प्रवृद्ध:, भाषाणामाधारेण राज्यानां पुनर्विभाजनानन्तरं स्थिरीकृत:, त्रिभाषासूत्ररचनानन्तरं च अपरिहार्य: सञ्जात: । विज्ञान-तन्त्रज्ञानयो: तत्रापि विशिष्य दूरसञ्चारक्षेत्रे समुत्पन्नाया: प्रगते: कारणात् अद्य न केवलं संस्कृतभाषा परं सर्वा अपि भारतीयभाषा: जीवनमरणयोर्देहल्यां तिष्ठन्ति । आगामिनि च शतमाने कस्या: भाषाया: किं स्थानं कुत्र चेति ऊहितुमपि न शक्यते दूरदर्शन-इण्टरनेट्-सैबरस्पेस् - लेसर् डिस्क् - संगणक-प्रभृतीनां विविधयन्त्रतन्त्रविज्ञानानां विश्वेऽधुना । अत: इदानीं संस्कृतस्यापि संरक्षणसंवर्धनयो: कृते विचार: आवश्यक एव ।

संस्कृतस्य समस्या: प्रदेशानुसारं भिन्ना: भवन्ति । परिस्थितिम् अनुलक्ष्य समाधानम् अन्वेष्टव्यं भवति । अखिलभारतस्तरे काश्चन समस्या: सन्ति । राज्यस्तरेषु, शालास्तरेषु च चित्रविचित्रा: समस्या: संलक्ष्यन्ते । शैक्षणिककारणापेक्षया राजकीय-सामाजिक-सांस्कृतिक-आर्थिक- जातीय - पक्षपाताश्रित-समस्या एव अधिका: सन्ति । संस्कृतज्ञैरेव कृता: क्रियमाणाश्च समस्या: न खलु अल्पीयस्य: । तासां सर्वासां समस्यानां परिहारसूचनम् अस्मिन् लेखे न शक्यते, अनौचित्यात् स्थलाभावादपि । अत: साधारणरूपेण केवलं संस्कृतभाषामाश्रित्य यन्मुख्यं, तत्र च विशिष्य संस्कृतस्य समुन्नतिं सरलीकरणं चाधिकृत्य, संक्षेपत: किञ्चिदत्र प्रस्तूयते ।



संस्कृतस्य समुन्नति: इत्यत्र भाषाया अस्या:

सर्वतोमुखाभिवृद्धि: अपेक्ष्यते । सेयं समुन्नति: केषाञ्चन संस्कृतज्ञानां वृद्धानां वा संमानेन, अथवा तेभ्य: किञ्चिदिव धनराशिप्रदानद्वारा, नैव सम्भवति । इदं च समुन्नतिरूपं कार्यं न केवलं प्रशासनाश्रितम् उताहो संस्कृतशिक्षकाश्रितं/छात्राश्रितं परं सर्वजनसाधारणाभियानरूपं मुख्यं कार्यं विद्यते । अत एव अस्मिन् महति कर्मणि सर्वेषां योगदानं सहकार: प्रतिभूत्वमपि इष्यते । यदि सर्वेऽपि मिलित्वा प्रामाणिकरूपेण स्वं स्वं कर्तव्यं निर्वहन्ति तदा संस्कृतं विश्वभाषा अर्थात् विश्वे संगणकद्वारा सर्वत्र उपयुज्यमाना भाषा भवितुमर्हति इत्यत्र न मे संशीति: ।

संस्कृतस्य समुन्नतिरूपक्रियाया: नाना -मुखानि विद्यन्ते । भाषाया: साहित्यस्य शास्त्राणां शिक्षणस्य सामान्यज्ञानस्य च संरक्षणं संवर्धनं प्रचारप्रसारौ च अत्र अन्तर्भवन्ति । परिवर्तनशीले समाजे परिवर्तनानुसारेण प्रतिक्षणं प्रयत्ना: विधेया: भवन्ति । सदाकालमपि सांप्रतिकत्वापादनं (updating) सर्वभाषाणामपि इष्यते । या भाषा समग्रा: भावना:, सर्वांश्च विषयान् प्रकटीकर्तुमसमर्था भवति सा पृष्ठत: तिष्ठति । अत एव नित्यं नूतनशब्दनिर्माणं नवनवीनग्रन्थानां, साहित्यग्रन्थानां शास्त्रग्रन्थानामपि, विरचनं जीवद्भाषाया: लक्षणं भवति । केवलं साहित्यभाषात्वेन शिष्टभाषात्वेन उन्नतशिक्षणमाध्यमत्वेनैव संस्कृतं द्विसहस्रवर्षेभ्य: प्रचलद्वर्तते इत्ययं सत्योऽपि आश्चर्यजनक: विचार: अस्ति । या सहस्र-सहस्रवर्षेभ्य: न मृता तस्या: मरणस्य अवसर एव नास्ति । परं तस्या: समुन्नत्यै आवश्यक: यत्न: करणीय इत्यत्र आलस्यम् अनपेक्षितम् । इतरा: भाषा: अस्माकं पुरत एव वृद्धा: प्रवृद्धा: संवृद्धा: वर्धमानाश्च विद्यन्ते । तत्र को हेतु: स्यादिति तत्त्वम् अवगन्तव्यम् । तादृशा एव प्रयत्ना: तेनैव प्रमाणेन, आवश्यकतायां विद्यमानायाम् अधिकप्रमाणेनैव, अस्माभि: अनुष्ठेया: भवन्ति । तदानीमेव संस्कृतं सुयोग्यं स्थानम् अलङ्करिष्यति ।

यद्यस्माकं देशस्य इतिहासः अवलोक्यते अस्मिंश्च देशे विविधकालखण्डेषु विविधभाषाः सार्वभौमस्थानम् अवाप्नुवन्-कदाचित् संस्कृतं, कदाचित् प्राकृतं, कदाचित् पर्षियन्/अरबी, कदाचित् क्वचिच्च फ्रेञ्च्, पोर्तुगीस् तथैव अद्यत्वे बहुत्र हिन्दी नानास्थलेषु प्रादेशिक्यः भाषाः च । परं सर्वत्रापि इंग्लिष्भाषा प्राशासनिकभाषात्वेन शिष्टव्यवहारभाषात्वेन शिष्टत्वापादनभाषारूपेण च वर्तते । संस्कृतज्ञेष्वपि इंग्लिष्भाषां जानन्तो जनाः सामाजिकं गौरवं समधिकमेव प्राप्नुवन्ति । इदं सर्वमपि कथं सम्पन्नम्? उत्तरं दत्तमस्ति कौटिल्येन व्यासमहर्षिणापि 'राजा कालस्य कारणम्' इति । राजा अथवा अद्यतनीये समाजे प्रशासनं यदिच्छति तदवश्यं भवति । प्रजाप्रभुत्वे तु प्रजाभिप्रायस्यापि किमपि स्थानं विद्यते । परं प्रजासु बहवः अशनवसनवसतिसमस्यापरिहारे एव संलग्नाः, निमग्नाः, तत्साधने एव लोकान्तरगताश्च भवन्ति । राज्यप्रशासनानि प्रान्तीयभाषाणामुद्धारे, केन्द्रप्रशासनं च हिन्दीभाषायाः प्रचारे, शिष्टजनाश्च इंग्लिष्भाषाध्ययने बद्धादराः दरीदृश्यन्ते । सत्यामेतादृश्यां परिस्थितौ संस्कृतस्य समुन्नतिं को वा समीहते? विदेशगमनमेव यदा जीवनस्य परमं लक्ष्यं भवति तदा 'पराविद्यायाः' प्रसक्तिरेव नास्ति । यत्र कुत्रापि कथमपि गच्छतः प्रवाहस्य परिवर्तनं न सुलभसाध्यम् । संस्कृतज्ञाः स्वस्वगृहेषु गृहस्य सदस्येषु संस्कृतप्रेम वर्धयितुमेव असमर्थाः सन्ति अधुना । अतः संस्कृतसमुन्नतिरिति वक्तुं सुकरं, कर्तुं दुष्करं कर्म विद्यते । 'अर्थकरी विद्या' एव जनैः इष्यते प्राप्यते च । नाहमत्र दोषं पश्यामि । परं वस्तुस्थितिः सम्यगवगन्तव्या । यावत्पर्यन्तं विदेशेषु उद्योगप्राप्तेः अवसराः भविष्यन्ति तावत्पर्यन्तमपि इंग्लिष् भारते अवश्यं स्थास्यति । संस्कृतस्य स्पर्धा इंग्लिष् भाषया सह वर्तते इति न विस्मर्तव्यम् ।

संस्कृतस्य समुन्नत्यै अद्य अवश्यमनुष्ठेयाः उपायाः केचन एवं वर्तन्ते-

(१) सर्वप्रथमं तु सार्वजनिकमनस्सु संस्कृतविरोधिनी या भावना वर्तते सा निर्मूलनीया । यद्यपि संस्कृतविरोधः अज्ञानमेव आस्ते तथापि विरोधः अस्तीति सः निर्मूलनीयः । असति प्रतिबन्धके एव प्रयत्नाः सर्वे सफला भवन्ति । संस्कृते कस्यापि प्रदेशविशेषस्य, जातेः धर्मस्य वा स्वाम्यं नास्ति । न आसीत् । न भविष्यति च इति सर्वैः अवगन्तव्यं भवति ।

(२) संस्कृतस्य सार्वजनिकजीवने कः उपयोगः वर्तते अर्थात् संस्कृतशिक्षणं किमर्थम् आवश्यकमिति सर्वे जनाः उद्बोधनीयाः । प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते किल । संस्कृताध्ययनेन व्यक्तेः समाजस्यापि कीदृशो लाभः भविता इति वारं वारम् उपदेष्टव्यं भवति ।

(३) संस्कृतस्य अध्ययनार्थं सर्वविधः अवसरः कल्पनीयः । शालासु विद्यालयेषु विद्यापीठेषु मठेषु मन्दिरेषु सङ्घसंस्थासु च संस्कृतशिक्षणस्य कृते सुव्यवस्था विधेया । योग्याः अध्यापकाः एव नियोक्तव्याः । संस्कृतस्य नाम्नि धनव्ययीकरणेन केवलम् इष्टं कार्यं न सम्पद्यते इति अवधेयम् ।

(४) संस्कृतं ये पठन्ति तेभ्यः अध्ययनकाले छात्रवेतनं प्रोत्साहधनमपि प्रदेयम् । अध्ययनोत्तरं तु उद्योगः प्रदेयः । निश्चिते उद्योगे सर्वोऽपि जनः अपेक्षितां विद्यार्हतां लभते । यदा च बुद्धिशालिनः क्षेत्रेऽस्मिन् प्रवेशं स्थानं च लभन्ते तदा संस्कृतं स्वयमेव वर्धते । मूर्खबाहुल्यात् न किमपि वर्धते ।

(५) सर्वोऽपि संस्कृतज्ञः उद्योगप्राप्तेरनन्तरं स्वभाषायाः स्व-स्व-शास्त्रस्य संरक्षणार्थं संवर्धनार्थं च अवश्यमनुष्ठेयान् उपायान्

विदध्यात्। एकः एकस्य शास्त्रस्य परिनिष्ठितः पण्डितः भवेत्। स्वजीवने कांश्चन छात्रान् प्रशिक्षयेत्। एकमपि वा ग्रन्थं विरचयेत्...इत्यादीत्यादि।

(६) संस्कृते विद्यमानस्य ज्ञाननिधेः सारं मातृभाषाद्वारा विदेशभाषाद्वारा वा इतरेभ्यः वितरणमेकम् आवश्यकं कार्यम्। संस्कृतज्ञैः संस्कृतेन समम् इतराः भाषाः इतराणि शास्त्राणि च अवश्यं प्राप्तव्यानि। तदा एव वयं समाजे उपयुक्ताः भवेम गौरवं प्राप्नुमश्च।

(७) भाषा तु एकः निरन्तरः प्रवाहः। संस्कृतं न कदापि एकत्र स्थितम् 'अचलद् जलं' आसीत्। व्यवहारे विद्यमाना न कापि भाषा परिवर्तनं परिहर्तुं प्रभवति। संस्कृते न किमपि परिवर्तनमभूत् इति तु साहसोक्तिरेव। वैदिकी भाषा अद्य कुत्र प्रयुज्यते? प्रतिप्रदेशं संस्कृतोच्चारणं, प्रयुज्यमानं शब्दजातमपि, भिद्यत एव इति सूक्ष्मेक्षिकयैव ज्ञातुं शक्यते। सर्वस्मिन्नपि काले नूतनशब्दाः संस्कृते निष्पादिताः सन्ति। नूतनविषयाः नूतना शैली अपि तदा तदा आश्रिता अस्त्येव। अतः अद्यापि 'सांप्रतिकत्वापादनार्थं' (updating) संस्कृते नूतनशब्दाः निर्मेयाः। नूतनविषयाः ग्राह्याः। नूतनशैली आश्रयणीया। नूतनग्रन्थाः रचनीया एव। इतरासां सर्वासां भाषाणां समुन्नतिरपि अनेन मार्गेण एव सञ्जाता। यदि संस्कृतस्यापि समुन्नतिरिष्यते तदा अयमेव तदर्थं राजमार्गः।

(८) 'पाणिन्युपज्ञं व्याकरणम्', 'त्रिमुनि व्याकरणम्' इत्यादि कथ्यते स्म। तथापि आञ्जनेयः 'नवव्याकरणपण्डितः' अभूत्। पतञ्जलेरनन्तरम् रामकृष्णगोपालभाण्डारकरपर्यन्तं तदुत्तरमपि न जानीमः कियन्ति व्याकरणानि कियन्तो ग्रन्थाश्चेति। मम्मटानन्तरमपि जगन्नाथः अलङ्कारशास्त्रे नूतनं कमपि विषयमन्तर्न्यवेशयत्।



शङ्कराचार्यात् अनन्तरमपि दर्शनशास्त्रं संवर्धितमभूत्।

बालगङ्गाधरतिलकोऽपि गीतायाः नूतनं भाष्यमरचयत् । कालिदासानन्तरमपि कवयः समुद्भूताः । अतः प्रतिभा प्राचीनकाले एव समापिता नास्ति । आगामिनि च काले प्रशस्ततमाः लेखकाः भवितुमर्हन्ति एव । रवीन्द्रनाथ ठक्कुर-बङ्किमचन्द्रप्रभृतिभिर्लेखकैः बङ्गालीभाषा समुन्नता । संस्कृतस्य समुन्नत्यै अपि तादृशाः साहितीकाराः शास्त्रकाराश्च अपेक्षिताः । आधुनिकं सर्वं शास्त्रमपि संस्कृते प्राप्तं भवति चेत् संस्कृतं समुन्नतमिति कथयितुं शक्यते इत्यतः साहित्यस्य शास्त्रस्य ग्रन्थरचनैव समुन्नतेः मुख्यो हेतुः ।

(९) संस्कृतज्ञानां संस्कृतानुरागिणां छात्राणामपि तदा तदा मिलनं संमेलनमपि उन्नतेः एकः उपायः । संस्कृतव्यवहारः, संस्कृतपत्रिकासञ्चालनं पठनं च, समूह-सम्पर्कमाध्यमेषु संस्कृतस्य प्रयोगः, संस्कृतनाटकानां प्रतियोगितानाम् आयोजनम्....इत्यादिरूपेण संस्कृतप्रचारप्रसारयोः कृते सर्वसम्भवानाम् उपायानाम् अनुष्ठानं संस्कृतसमुन्नत्यै परमावश्यकम् ।

(१०) भारवेरनन्तरं जगन्नाथपण्डितपर्यन्तमपि संस्कृतस्य प्रौढं रूपमेव आश्रितं दर्शितं प्रयुक्तं च पण्डितवर्यैः । अस्य अद्य अयं परिणामः यत्संस्कृतं क्लिष्टमिति संस्कृतज्ञा अपि वृथा भीताः । अतः संस्कृतस्य समुन्नत्यै भाषायाः अस्याः सरलीकरणम् इष्यते आधुनिकैः । सरलसंस्कृतस्य प्रयोगः एकः मुख्यः उपायः ।

**संस्कृतस्य सरलीकरणमिति** मन्त्रः अद्यत्वे शिक्षाशास्त्रिभिः राजकीयनेतृभिः संस्कृतेतरभाषाभिज्ञैः क्वचिच्च कैश्चित् संस्कृतपण्डितंमन्यमानैः जनैः बहुधा प्रयुज्यते । अत्र विषये विवरणं किञ्चित् अपेक्षितमिति मन्यते अयं जनः । भाषायाः कस्याश्चित् सरलीकरणम् अन्यत्, अन्यदेव च किञ्चित् तस्याः सरलरूपेण व्यवहरणमिति । तर्हि किं नाम सरलीकरणम्? संस्कृतविषये यदा तु

केचित् यत् द्विवचनस्य निष्कासनम्, सन्धेः अकरणम्, समासस्य विभजनम्, छन्दसां भङ्गः, पाणिनेः विरोधः, व्याकरणस्य अपाठनम्....अर्थात् यत् यत् क्लिष्टमिति अज्ञेभ्यः प्रतीयते तत्सर्वं निराकर्तव्यमिति । अत्र जिज्ञासु-जनानां योग्यतानुसारेण छिद्यमाने संस्कृतभवने अनवस्थाप्रसङ्गात् अन्ते अक्षराण्यपि नावशिष्यन्ते यतः कासुचित् भाषासु एतावन्तो वर्णाः एतावन्ति संयुक्ताक्षराणि न विद्यन्ते एव ।

परमत्र अयमेकः प्रश्नः प्रादुर्भवति । अद्य संस्कृतं किमर्थं पठनीयं पाठनीयं रक्षणीयं वर्धनीयं वा इति । विपणिं गत्वा शाकादिपदार्थानानेतुं, कार्यालयादिकं गत्वा प्राशासनिकं धनसाह्यं संप्राप्तुं, रेलयानेन प्रयातुम् आरक्षणं विधातुं वा संस्कृतम् अधीयते अथवा अस्य अन्यदेव किमपि विशिष्टं कारणं विद्यते यदितरभाषाणामध्ययनेन लब्धुं न शक्यते इति । संस्कृतभाषैव सरलीभूय पाली-प्राकृत-अपभ्रंश-हिन्द्यादिरूपेण परिणता वर्तते । अस्माभिः पुनः सरलीक्रियते चेत् किं तत् संस्कृतव्यपदेशम् अर्हति? सरलीकृतेऽपि संस्कृते तेन संस्कृतेन अस्माकं पूर्वपुरुषाणां चिरसञ्चितं ज्ञानम् आप्तुं शक्यते किम्?

मन्मतेन तु संस्कृतस्य सरलीकरणमिति अनर्थकं वस्तु । न कापि भाषा सरला क्लिष्टा सरलीकरणयोग्या चेति भवति । परं सर्वाः भाषाः सरलं रूपं, क्लिष्टं रूपं, विशिष्टं रूपमपि वहन्ति । प्राड्विवाकैः न्यायालयेषु प्रयुज्यमाना, वैज्ञानिकैः प्रयोगालयेषु उपयुज्यमाना, विमानपत्तनेषु विपणिषु वीथीषु शालासु तथा अज्ञानां वार्तालापेषु च व्यवह्रियमाणा इंग्लिष् भाषा एका एव न । नाम तु एकमेव आस्ते । परं विशिष्टसन्दर्भेषु विशिष्टजनैः पारिभाषिकशब्दाः विभिन्ना एव प्रयुज्यन्ते । षेक्सपियर नाटकानां भाषा अद्य अनूद्यते इंग्लिष् भाषयैव । एवमेव तर्कशास्त्रदर्शनशास्त्रादिषु प्रयुज्यमानं संस्कृतं शास्त्रीयं वर्तते ।

काव्यनाटकादिषु पत्रपत्रिकासु पञ्चतन्त्रादिषु प्रयुज्यमानं संस्कृतं तु अपरमेव आस्ते । श्रोतृयोग्यतामाश्रित्य वक्तुः अर्हतामनुसृत्य, सान्दर्भिकम् औचित्यं परिगणय्य सरलभाषायाः प्रयोगः विधेयो भवति । विधातुं शक्यते च । अत्र सरलस्य तत्त्वं भिद्यते । यत् एकस्मै एकत्र सरलं तदेव अन्यत्र अन्यस्मै क्लिष्टं स्यात् । तदेव पुनः पुनः प्रयोगेण परिचयेन च क्लिष्टमपि सुलभं भवेत् । अतः सरलीकरणं न इष्यते, न साध्यते, न सर्वैः अङ्गीक्रियते परन्तु भाषायाः सरलरूपाणां प्रयोगः सर्वैः इष्यते । वस्तुतस्तु न केवलं संस्कृते परं सर्वासु भाषासु अपि क्लिष्टवाक्यानां रचनैव ऋजुरूपेण प्रयोक्तुं प्रभवति । संस्कृतविषये तु व्यवहारविहीनता एव क्लिष्टभावनायाः निदानं विद्यते ।

संस्कृतभाषायां सरलरूपेण व्यवहर्तुं, न तु संस्कृतमेव सरलीकर्तुम्, इमे केचन उपायाः अनुष्ठानयोग्याः सन्ति । अनुष्ठितेषु एषु उपायेषु सत्यमेव संस्कृतं सरलमिति प्रतीयते इति मदीयः अभिप्रायः आस्ते । उपायाश्च यथा-

(१) सर्वप्रथमं संस्कृतज्ञैः पाण्डित्यप्रदर्शनरूपः दुरभ्यासः सर्वथा त्याज्यः । श्रोतारः यदि नावगच्छन्ति तेन किं प्रयोजनं भाषणदानेन? अस्मदीयान् अभिप्रायान् अनुभवान् अन्वेषणानि च इतरेभ्यः वितरीतुं 'भाषा' नामकम् एकं माध्यमं वर्तते । भाषा सम्पर्कसाधनमस्ति न तु स्वयमेव काचित् सिद्धिः । अतः श्रीहर्षबाणभट्टादीनां भाषा अद्य न प्रयोक्तव्या विशिष्य अपण्डितानां पुरतः । **'अशेष-शेमुषी-मुष-माष-मश्नामि'** इति वक्तव्ये 'अहं माषं खादामि । माषः बुद्धिं नाशयति' इति वक्तुमुचितम् ।

(२) सरलभाषायाः प्रयोगः कर्तव्यः । अस्य अयमर्थः भवति ये ये शब्दाः मातृभाषायामपि प्रयुज्यन्ते संस्कृतार्थेनैव ते एव शब्दाः बाहुल्येन प्रयोक्तव्याः । अर्थात् 'समसंस्कृतम्' अथवा 'तत्सम' शब्दा

एव अधिकतरं प्रयोजनीयाः ।

(३) वाक्यरचनायां यावत्साध्यं सन्धि-समास-वृत्त्यन्तराणि न प्रयोजनीयानि । अर्थात् 'सा विवक्षामपेक्षते' इति यत्र विवक्षुः अधीनं वाक्यं भवति तत्र लघुलघूनि वाक्यानि विरचनीयानि । 'सरभस-सारमेय-विलुप्यमान-कातर-तरल-तारकाणाम्-एणकानां करुण-कूजितेन' इति बाणवाक्यं सुन्दरमपि तन्न सर्वदा, न चैव सर्वेभ्योऽपि । सर्वं स्थाने एव शोभते । सारल्यं काठिन्यमपि च ।

(४) यद्यपि महाकाव्यादिकं शास्त्रकाव्यं विद्वत्काव्यमपि इष्यत एव तथापि अधुनातनकाले गद्यस्य प्राचुर्यमावश्यकम् । तदपि न वृत्तगन्धि । संस्कृतपत्रिकासु इतिवृत्तविवरणे, इतरभाषापत्रिकासु च, यादृशं सुलभं सरलं सुगमं गद्यं लिख्यते-बालानां कृते इत्येव-संस्कृतेऽपि तादृशं लघुवाक्यैः गुम्फितं गद्यमेव लेख्यम् ।

(५) आधुनिकीम् आवश्यकताम् अनुलक्ष्य, नूतनशब्दाः लघुशब्दाः संस्कृतभाषामर्यादाम् अविहाय निष्पादनीयाः यथावसरं प्रयोजनीयाश्च । प्राचीनशब्देष्वपि अकारान्तशब्दाः अथवा साधारणशब्दाः प्रयोक्तव्याः, न तु विशेषशब्दाः सङ्कीर्णाश्च । विद्यमानेष्वपि बहुषु समानार्थकशब्देषु नितरां परिचित एव शब्दविशेषः प्रयोक्तव्यः, न कथमपि अप्रसिद्धः ।

(६) यत्र यत्र अनर्थः न स्यात् तत्र सर्वत्र यावत्सम्भवं क्रियापदानां स्थाने कृदन्ताः प्रयोज्याः प्रारम्भिकस्तरेषु । नामधातवः क्वचित् निवेशनीयाः स्युः सरलतापादनार्थम् ।

(७) सत्स्वपि दशसु लकारेषु प्रारम्भकाले एव दशानां रटनं नावश्यकम् । लट् लिट् लृट् लोट् विधिलिङ् लकाराः, दशगणेषु १-४-६-१० गणीयधातवः, उभयपदिनश्च केचित् पाठनीयाः ।

(८) विविधकृत्-तद्धितप्रत्ययानां साहाय्येन संस्कृतशब्दसम्पदः वर्धनं कथं साध्यमिति सुचारुतया पाठनीयम् । सति च योग्ये अध्यापके संस्कृतव्याकरणपाठः काव्यपाठापेक्षया रुचिरतरः स्यात् ।

(९) संस्कृतवाचनग्रन्थाः - अमरचित्रकथा सदृशाः- रचनीयाः । बहवः शब्दकोशाः कार्याः । संस्कृतव्यवहारः कर्तव्यः संवर्धनीयश्च ।

(१०) संस्कृतस्य अपरिचय एव तस्य क्लिष्टतायाः कारणमस्ति । अतः संस्कृतप्रचारप्रसारार्थं यद्यदस्मिन् जगतीतले साध्यं तत्सर्वमपि अवश्यमनुष्ठातव्यम् । सकृत् साधु परिचिते संस्कृते सरलीकरणस्य प्रश्न एव नोदेति । सकलभारतीयेभ्यः संस्कृतं सुलभमेव वर्तते । सर्वासु भाषासु संस्कृतशब्दाः सन्ति । व्याकरणं संस्कृताश्रितम् । वाक्यरचना संस्कृतसमाना । वस्तुजातं समानमेव । वैज्ञानिकभाषाकारणात् संस्कृतस्य अध्ययनं अध्यापनमपि न क्लेशप्रदम् । परं तदर्थं शिक्षकाः प्रशिक्षणीयाः । पठ्यग्रन्थाः नूतनतया विरच्याः । पाठोपकरणानि प्रयोक्तव्यानि । श्रद्धा उत्पादनीया । प्रयत्नः विधेयः । संस्कृतपरिसरः निर्मातव्यः च ।

लेखविस्तरभयात् संक्षेपतो निवेदनीयं चेत् संस्कृतस्य अध्ययनस्य मुख्यं लक्ष्यं निश्चित्य तदर्थम् आवश्यकं सर्वमपि यत्नजातं कर्तव्यमेवा इतरभाषाणां समुन्नत्यै सरलीकरणार्थं च यद्यत् कृतं तत्सर्वमपि कर्तव्यं संस्कृतस्यापि । इदं कार्यं न केवलं प्रशासनस्य, संस्कृताध्यापकानां वा परन्तु सर्वेषां जनानाम् । संस्कृतज्ञानां प्रतिभूत्वं सर्वाधिकं वर्तते । उद्यमेनैव सिध्यन्ति कार्याणि न मनोरथैः । सोत्साहानां नास्त्यसाध्यं नराणां मार्गारब्धाः सर्वयत्नाः फलन्ति । जीयात् संस्कृतभारती ।

* * *

# संस्कृते पत्रकारिता

## (मौलिकाः केचिद्विचाराः)

### पीठिका

भारतीय-पत्रकारितायाः इतिहासे **'संस्कृतपत्रकारिता'** इति तु एकः मुख्यः अनिवार्यः अध्यायः वर्तते । यद्यपि अद्यतनीये पत्रकारिताशिक्षणे संस्कृतपत्रिकाणां विषये अनादरः तिरस्कारः अज्ञानमपि विजृम्भते तथापि अस्माकं देशे संस्कृतपत्रिकाणां किमपि विशिष्टं स्थानं, विशिष्टमेव किमपि कार्यम् आसीत्, अस्ति, भविष्यति चेत्यत्र न खलु संशयलेशस्यापि अस्ति अवसरः । अत एव अद्यापि बह्व्यः संस्कृतपत्रिकाः प्रकाश्यमानाः सन्ति नूतनाश्च उद्भविष्यन्ति नियतम् । उदाहरणार्थं च कर्णाटकराज्यस्य मेलुकोटे-नामक-तीर्थक्षेत्रात् विगतमासे एव छन्दस्वती नाम्नी पत्रिका प्रादुर्भूता । बेङ्गलूरुनगरात् प्रकाश्यमानः **सम्भाषणसन्देशः**, मद्रपुरीतः अथवा चैन्नैतः नियतरूपेण विलसन्ती संस्कृतचन्दमामा, दिल्ली-संस्कृत-अकादेमीतः सुचारुतया निष्कास्यमाना संस्कृतमञ्जरी, देववाणी-परिषदः अर्वाचीनसंस्कृतम्, भारतीयविद्याभवनस्य त्रैमासिकपत्रिका **संविद्**, नागपुरस्य साप्ताहिकी संस्कृतभवितव्यम्....इत्यादिकाः पत्रिकाः कस्य वा संस्कृतसहृदयस्य न विदिताः?

### शुभारम्भः

१८५७ तमे ख्रिस्तवर्षे सम्भूतः प्रथमः भारतस्वातन्त्र्यसंग्रामः एव प्रादेशिकभाषापत्रकारितायाः आरम्भबिन्दुः इति इतिहासः उल्लिखति । यथा इतरासु प्रमुखासु भारतीयभाषासु पत्रिकाः समारब्धाः तदानीमेव तथा च तैरेव उद्देश्यैः संस्कृतपत्रिकाः अपि प्रादुर्भूताः ।

कासाञ्चन प्रादेशिकपत्रिकाणां प्रारम्भः वैदेशिकैः कृतश्चेत् भारतीय विद्वद्भ्य एव प्रादुर्भूय तेषां त्याग-तपो-विद्वत्त्व-परिश्रमादीनां फलरूपेण फलिताः, प्रभाववत्यश्च इमाः प्रवर्धिताः इतीदं संस्कृतपत्रिकाणां वैशिष्ट्यम् ।

अद्ययावत्कम् अनुसन्धानमाश्रित्य उल्लेखनीयं चेत्, भारतस्यैवेति न, निखिलस्यापि विश्वस्य, प्रप्रथमा संस्कृतपत्रिका **काशीविद्यासुधानिधिः** अथवा पण्डित-पत्रिका वर्तते । सेयं पत्रिका वाराणसीतः १८६६ तमे ख्रिस्तवर्षे जूनमासस्य प्रथमे दिने समुत्पन्ना । ततः अद्यपर्यन्तं माकिं पञ्चशताधिकाः संस्कृतपत्रिकाः प्रकाशनभाग्यं प्राप्तवत्यः । यद्यपि न सर्वास्ताः वर्तमाने काले विद्यन्ते, बालग्रहादिरोगैः अल्पायुषि एव नैकाः पञ्चत्वमाप्ताश्च तथापि बह्वीभिः पत्रिकाभिः स्वजीवितावधौ महत्कार्यं सम्पादितमिति हर्षस्य स्थानमास्ते । मुहूर्तं ज्वलितं श्रेयः न च धूमायितं चिरम् । अयं च अल्पायुरूपो रोगः इतरभाषाक्षेत्रेऽपि विद्यते, अस्माकं देशे च प्रजाजनानां विषयेऽपि सत्यो वर्तते इति के वा न जानन्ति?

## व्याप्तिः वैशिष्ट्यं च

भारतस्य प्रादेशिकभाषापत्रिकास्तु तत्तद्भाषाभाषिणां क्षेत्रेषु केवलं प्रसिद्धाः प्रयुक्ताः उपयुक्ताश्च । परं संस्कृतपत्रिकाः देशकालातीताः । इंग्लिष्पत्रिकाः इव सर्वप्रदेशेषु व्याप्ताः सर्वजनैः आदृताश्चेमाः विदेशेष्वपि लब्धप्रतिष्ठाः । संस्कृत-पत्रिकाणां प्रकाशकाः, मुद्रकाः, सम्पादकाः, लेखकाः, ग्राहकाश्च अन्यान्यप्रादेशिकाः अथवा सर्वप्रदेशसाधारणाः इति तु रोचकः अविस्मरणीयश्च कश्चन वस्तुविशेषः । अद्यापि, इंग्लिष्पत्रिकाः तद्भाषावित्सु इव, केवलं संस्कृतपत्रिका एव अखिलभारतस्तरे संस्कृतज्ञानां समेषां सम्पर्कमाध्यमत्वेन स्वकार्यं निर्वहन्ति ।

हिन्द्यादीतरभाषापत्रिकाणां ग्राहकसंख्या अपरिमितापि यत्र प्रादेशिकभाषाः किमपि सार्वजनीनं कर्म कर्तुं न प्रभवन्ति तत्रापि अर्थात् अखिले भारते साम्प्रदायिक-संस्कृतपाण्डित्यपरिसरे संस्कृतमेव समर्थं साधनमास्ते । अधुना, पूर्वमपि, वाणिज्यसदनानि धनिकाः नेतारः च इतरभाषापत्रिकाणां स्वामिनः प्रवर्तकाः प्रचारकाश्च । देशस्य भाषायाः जनानां वा उद्धारापेक्षया स्वस्थानसंरक्षणं, स्वप्रतिष्ठाप्रवर्धनं, स्वविरोधिनां दमनं, प्रशासनस्य प्रशंसा, धनार्जनमपि बृहत्पत्रिकाणां प्रधानलक्ष्यम् । परं संस्कृतपत्रिकाः निर्धनैः संस्कृतसेवाबद्धदीक्षैः भाषाविद्भिः देशस्य भाषायाः साहित्यस्य संस्कृतेश्च संरक्षणार्थं संवर्धनार्थं प्रचारार्थं परोपकारार्थं च प्रारब्धाः प्रवर्तमानाश्च सन्ति । धनहानिः, न धनावाप्तिः, सकलसंस्कृतपत्रकाराणां साधारणो अनुभवः फलं च आस्ते ।

तथापि संस्कृतपत्रिकाभिः यत् कार्यं स्वातन्त्र्यावाप्तेः पूर्वं कृतम् अद्यापि क्रियमाणं वर्तते तदनितरसाधारणं महत्त्वपूर्णं च साधुकर्म आस्ते । देशभक्तिः समाजोन्नतिः सामाजिकन्यायः....इत्यादिध्येयानां सिद्धये प्रयतमाना अपि पत्रिकाः- अर्थात् अन्यभाषापत्रिकाः - वाणिज्यकारणात् प्रादेशिक-भावनाः, परम्परया च सङ्कुचितभावनाः, द्वेषभावनाः, स्वार्थभावनाः, अनैतिकताम्, अश्लीलताम्, अद्यत्वे तु वैदेशिकसभ्यतां केवलं जनमानसेषु स्थिरीकुर्वन्ति इति स्वयं सिद्धः विषयः वर्तते । भारतीयसंस्कृतेः विनाशार्थं काभिरपि पत्रिकाभिः अविरतप्रयत्नः क्रियमाणो वर्तते इत्येव वास्तविकी स्थितिः । संस्कृतपत्रिकासु सङ्कुचितभावनाभ्यः प्रवेश एव नास्ति । भारतस्य अखण्डता, समग्रता, एकता...इत्यादीनां, भारतीयधर्मस्य, तत्त्वस्य, प्राचीनसंस्कृतेः, सभ्यतायाः एवं मानवतायाः संरक्षणं संवर्धनं स्थिरीकरणमेव संस्कृतपत्रिकाणां ध्येयम् । वसुधैव कुटुम्बकम्, यत्र

विश्वं भवत्येकनीडम्, सर्वे अमृतस्य पुत्राः, कृण्वन्तो विश्वमार्यम्...इमानि लक्ष्यानि संस्कृतपत्रकाराणाम् । अत एव संस्कृतस्य पत्रकारिता भारतपत्रकारिता भवति । विश्वपत्रकारितायाः भागः भवति ।

**सिद्धयः उपलब्धयः**

प्रायः सार्धैकशतसंवत्सर-कालीनम् इतिहासं वहन्त्यः संस्कृतपत्रिकाः किं वा अकुर्वन्? तासां प्रभावः कुत्र दृश्यते? इति प्रश्नः क्रियते चेत् तस्य उत्तरप्रदाने महान् आनन्दः अनुभूयते । गर्वोऽपि आयाति ।

सर्वप्रथममिदम् आलोक्यताम् । पत्रिकाणां प्रारम्भात् प्राक् संस्कृतविषये जनमानसेषु कीदृशी धारणा आसीदिति चेत् - संस्कृतं पण्डितानां भाषा, पौराणिकी भाषा, धार्मिकभाषा, यन्त्रमन्त्र-तन्त्रादीनां रहस्यभाषा, मृतभाषा, क्लिष्टभाषा, देवानां भाषा अथवा मनुष्याणां कृते उपयोगरहिता भाषा । अत्र विद्यमानं साहित्यं केवलं पारलौकिकम् । यदि यः कोऽपि इदमध्येति स संन्यासी भविष्यति । पुराणप्रवचनं पूजापाठः पौरोहित्यं केवलं संस्कृतज्ञानां कर्तव्यक्षेत्रम् । अस्य पठनेन वयं गतकालस्य गर्तं गच्छामः । अस्यां भाषायां सजीवता नास्ति । न कोऽपि इदं वक्तुं प्रभवति । न सन्ति लेखकाः । आधुनिकतायाः वर्तमानस्य च विरोधिनी इयं भाषा इत्यादि इत्यादि । इमाः सर्वाः भावनाः सममेव निरस्ताः संस्कृतपत्रिकाभिः । संस्कृतस्य सजीवतायाः, वैज्ञानिकतायाः, आधुनिकतायाः, सर्वोपयुक्ततायाः, सर्वोपभोगस्य कृते स्वरूपयोग्यतायाः, सर्वभाषाणां संवर्धनार्थम् आवश्यकतायाः, देशस्य सम्पद्रूपतायाः च प्रदर्शनं प्रतिष्ठापनं च संस्कृतपत्रिकाणां महत्त्वं कार्यम् ।

भारवि-भट्टि-श्रीहर्षप्रभृतिभिः पण्डितैः बाणभट्टादिभिः

विद्वत्कविभिश्च संस्कृतस्य ग्रान्थिकं कठिनं प्रौढं गम्भीरं शास्त्रीयं चित्रं च यद्रूपं प्रयुक्तं प्रदर्शितं च तदपेक्षया व्यावहारिकं सरलं ललितं सुन्दरम् अक्लिष्टम् अकठिनं च रूपान्तरं लोकसमक्षं दर्शितम्। सरल-लघुतम-वाग्गुम्फितस्य अर्वाचीनस्य समसामयिकस्य संस्कृतस्य आविष्कारः उद्धारः प्रचारः प्रयोगश्च संस्कृतपत्रिकाणामपरा सिद्धिः। संस्कृतं प्रति रूढमूलस्य चिरप्रतिष्ठितस्य भीतिभूतस्य उच्चाटनं संस्कृतपत्रिकाणां मुख्या सिद्धिरिति मे मतिः।

अभिनवसाहित्यप्रकाराणाम् आविष्कारः, अर्वाचीन - संस्कृतसाहित्यस्य प्रचारः, संस्कृतभाषा—साहित्ययोः साम्प्रतिकत्वापादनम्, नवनवीनशब्दानां भावानां कल्पनानां परिकल्पनानां च उत्पत्तिः विकासः, समकालीनस्य भारतीयसाहित्यस्य निर्माणम् इत्यादिरूपेण संस्कृतभाषायाः साहित्यस्य च कृते महत् कार्यं सम्पादितं संस्कृतपत्रिकाभिः। भारतीयभाषाभ्यः वैदेशिकभाषाभ्यश्च विपुलं साहित्यम् अनुवादरूपेण पत्रिकामाध्यमेनैव संस्कृते अवतीर्णम्। अन्यान्यभाषाभ्यः परस्परम् आदानप्रदानरूपं मुख्यं साहित्यकृत्यम् अपूर्वरीत्या अधिकप्रमाणेन च संस्कृतपत्रिकाभिः विहितम्।

भारतस्य स्वातन्त्र्यसङ्ग्राम-सन्दर्भे शिष्टानां नायकानां विदुषां च कृते आवश्यकम् उद्बोधनम् अवश्यं विषयजातम् आवश्यकसामग्री अपि संस्कृतपत्रिकाभिः प्रदत्तानि। देशं धर्मं स्वातन्त्र्यमपि अधिकृत्य जनजागरणार्थं गीतानि लेखाः सम्पादकीय-टिप्पण्यः अपि साक्षाद्रूपेण प्रतीकतया रूपकादिभिश्च संस्कृतपत्रिकासु प्रकाशिताः। ब्रिटिषप्रशासनेन प्रतिबद्धासु तदानीन्तनकालीनासु पत्रिकासु संस्कृतपत्रिका अप्यासन्निति इतिहासगम्योऽयं विचारः। समाजपरिवर्तनक्षेत्रेऽपि, संस्कृतपत्रिकाः स्वीयं योगदानं यथाशक्ति अकुर्वन्।

प्राचीनग्रन्थानां रक्षणार्थं ताडपत्राणां मुद्रणं, प्राचीनसंस्कृतिसभ्यताविषये अभिमानस्य उत्तेजनं, प्राक्तनसम्प्रदायानां सार्थकविवरणं व्याख्यानं, शास्त्र-संरक्षणार्थं वाग्वादाः,...एवं रूपेण संस्कृतपत्रिकाभिः सर्वसाह्यं विहितम् । आस्तां तावत्सर्वमिदम् ।

सम्प्रति विज्ञानतन्त्रज्ञानयोः अभिवृद्ध्या, इंग्लिष् भाषायाः प्राचुर्येण, देशभक्तेः श्रद्धायाश्च न्यूनत्वात्, आर्थिक-सामाजिक-औद्योगिक-प्राथमिकतानां परिवर्तनात्, शिक्षणक्रमे संस्कृतस्य च्युतेः, शिष्टानाम् अल्पापत्यकत्वात् दरिद्राणां जनसंख्यास्फोटात् च, दूरदर्शन-आकाशवाणीत्यादीनां प्रभावाधिक्यात्...संक्षेपतश्च संस्कृतविरोधिपरिस्थितेः प्रत्यक्षत्वात् जीवनमरणप्रश्नः संस्कृतज्ञानां पुरतः वर्धमानो दृश्यते । यावत्कालं वैदेशिकाः प्रशासनम् अकुर्वन् वयं भारतीयत्वस्य घोषणं कुर्वन्तः स्मः । परमिदानीं विदेशीयानां पुरतः तेषां सभ्यताविषये स्पर्धां कुर्मः । अधुना अस्मभ्यं भारतीयं किमपि नेष्टम् । वैदेशिकवस्तूनि अस्माकं शिष्टतायाः द्योतकानि । ईदृशं मानसिकं बौद्धिकं च दास्यं न केवलं संस्कृतस्य परन्तु भारतीयधर्मस्य, दर्शनस्य, कलानां, विद्यानां, मूल्यानां, समाजस्थितेः, मानवसम्बन्धानामपि विरोधि वर्तते । अस्य च परिणामतः सर्वक्षेत्रेषु सङ्घर्षः, स्पर्धा, वैरस्यं, वैपरीत्यं विजृम्भते ।

**पत्रिकासमस्याः**

दूरदर्शनादिभ्यः विदेशपत्रिकाभ्यः, विदेशभाषापत्रिकातः प्रादेशिकपत्रिकाभ्यः, प्रादेशिकपत्रिकातः संस्कृतपत्रिकाभ्यः इति परस्परं भीतिः ज़ीवनसङ्घर्षः वर्तते । सर्वाभ्यः पत्रिकाभ्यः समस्याः वर्तन्त एव । कर्मकराणां ग्राहकाणां विद्युतः कर्गजस्य धनस्य लेखकानां वितरणस्य समयस्य विज्ञापिकानां च समस्याः सर्वसाधारणाः । प्रैषालयस्य समस्या अपि वर्तते लघुपत्रिकाभ्यः ।

प्रशासनं गुण्डाः उद्यमपतयश्च तदा तदा पत्रिकाप्रकाशने समस्याः उत्पादयन्ति। संस्कृतपत्रिकाणां समस्याः लघ्व्यः अपि प्रमुखाः एव। (१) सरलसंस्कृतेन सुचारुतया लेखनं, विशिष्य पत्रिकासु प्रकटनार्थं लिखितुम्, अपवादरूपेण केचन एव जानन्ति। बहुभिः लिखितं मुद्रणयोग्यमेव न भवति। आवश्यकम् आधुनिकं वैज्ञानिकं विषयमाश्रित्य लिखितुं संस्कृतक्षेत्रे लेखकानामभावः दरीदृश्यते। (२) संस्कृतसम्पादकाः बहवः सम्पादनं कर्म न जानन्ति। यत्कर्म इदानीं क्रियमाणं वर्तते तत् केवलं प्राग्रूपशोधनमिति अहं मन्ये। पत्रकारिता अपि एका विद्या। एका कला। अपठित्वा पत्रकारिताम् अदृष्ट्वा अन्यभाषापत्राणि, अविदित्वा सम्पादनं कर्म बहवः संस्कृतपत्रिकाः प्रचालयन्ति इति लज्जाकरोऽयं विषयः। (३) संस्कृतपत्रिकाः प्रकाशयितुं कोऽपि धनिकः उद्यमपतिः पुरतो नायाति यतः अत्र धनलाभस्य आशा नास्त्येव। अतः निर्धनाः भाषाभक्ताः कथमपि किमपि आरभन्ते। उत्पद्यन्ते विलीयन्ते दरिद्राणां च पत्रिकाः। यावच्छक्ति एका व्यक्तिः किञ्चित् करोति। तेन सह अथवा तस्यैव समस्याभिः सह सा पत्रिका मृतिमेष्यति। मूलधनाभावः मुख्या समस्या अस्ति। (४) विज्ञापिकाः एव पत्रिकाणां मुख्यपितरः मातरो वा। परं संस्कृतपत्रिकासु कः विज्ञापनं करोति? वाणिज्यवर्धनमेव विज्ञापनहेतुः। संस्कृतपत्रिकाभिः इदं कथमपि न सम्भवति। अतः धनस्य मूलं स्रोतः एव नास्ति संस्कृतस्य। (५) ग्राहकाः यदि बहवः भवन्ति विनापि विज्ञापनं पत्रिकाः चालयितुं शक्यते। परं संस्कृतक्षेत्रे जनाः सामान्यतया न किमपि पठन्ति। धनं दत्वा पत्रिकां क्रेतुं न खलु इच्छन्ति। निः शुल्कं प्रेषितमपि ते न पठन्ति। यदि च पठन्ति तत्र दोषारोपणं छिद्रान्वेषणं वा विधास्यन्ति केवलम्। संस्कृतज्ञानाम् ईदृशः विचित्रः, पाशवः, नीचतायाः, स्वभाव एव संस्कृतस्य संस्कृतपत्रिकाणामपि मारकः रोगः इति दृढा मे मतिः। यावत्पर्यन्तं संस्कृतज्ञाः न पठन्ति, न लिखन्ति,

न धनव्ययं कुर्वन्ति, न सक्रिया: भवन्ति तावत्पर्यन्तं संस्कृतस्य भविष्यं न भविष्यति । यद्यपि अन्या: लघ्व्य: समस्या: बह्व्य: भवन्ति तासां सर्वासां मध्ये संस्कृतज्ञानां संस्कृतोपेक्षा एव सर्वप्राथम्यं भजते इति हि निश्चिता स्थिति: ।

## वास्तविकी स्थिति:

तत्त्वतो दृश्यमाने, सम्प्रति प्रकाश्यमानासु संस्कृतपत्रिकासु, सम्भाषणसन्देशं विहाय, (अन्या: द्वित्रा: स्यु: संस्कृतभवितव्यसदृश्य: अपि), न कापि संस्कृतपत्रिका पत्रिकासु परिगणनामर्हति । बह्व्य: केवलं साहित्यपत्रिका: अथवा गृहपत्रिका: इति सीमिते क्षेत्रे, सीमिते अर्थे, पत्रिकात्वं वहन्ति । इतरभाषाणां सन्दर्भे पत्रकारिताया: वा पत्रिकासम्पादकस्य वा कियान् कीदृशो वा अर्थ: भवति स: संस्कृतविषये न खलु संगच्छते इत्येव वास्तविकी स्थिति: । नियतरूपेण प्रकाश्यमाना: पत्रिका: अल्पीयस्य: एव संस्कृते । अथापि अत्रत्य: पत्रिकाविन्यास:, मुद्रणरीति:, कर्गजस्य गुणधर्म:, सम्पादनस्य वैखरी, इतिवृत्तस्य लेखानां वा चारुता ग्राह्यता... इत्यादीनां पत्रिकारितावस्तूनां विषये अनुक्तमेव वरम् । अन्ताराष्ट्रियस्तरे तुलना क्रियते चेत् इदं हास्यास्पदं बालिशं वा केवलम् । Times, Newsweek, Reader's Digest, India Today, Frontline, Hindu, Statesman, Span. इत्यादीनां विषय: मास्तु परं ग्रामान्तरप्रदेशानां लघुपत्रिकाणां तुलनायामपि संस्कृतपत्रिकाणां गुण: गात्रं ग्राह्यता च नितरां नीचस्तरे वर्तते । उपरिनिर्दिष्टानां समेषाम् अथवा केषाञ्चन निरासादपि संस्कृतपत्रकारिताक्षेत्रं पूर्वमिव उपरि उड्डयितुं प्रभवति ।

## संस्कृतपत्रिकाणां भविष्यम्

"असाधना अपि प्राज्ञा बुद्धिमन्तो बहुश्रुता: । साधयन्ति आशु

कार्याणि काकाखुमृगकूर्मवत्'' इति प्रत्यहं बालेभ्यः वयं पाठयामः, न न पञ्चतन्त्रं पाठयति । क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे इति सुभाषितं सूचयति । मार्गारब्धाः सर्वयत्नाः फलन्ति इति भासः भाषते । चतुर्भिर्मिलितैः किं यत् जगतीह न साध्यते इति अनुभवोक्तिः । वस्तुतस्तु साम्प्रतिके काले पत्रिकासञ्चालनं न खलु तादृशं महत्, क्लेशप्रदं, कष्टसाध्यं वा कार्यं भवति । प्राज्ञत्वं बुद्धिमत्त्वं बहुश्रुतत्वं वा न खलु बहु संलक्ष्यते इत्येव अस्य क्षेत्रस्य दोषः । सुधर्माकारैः, आकाशवाण्या दूरदर्शनेनापि संस्कृतस्य साम्प्रतिकत्वं व्यवहारयोग्यत्वं च साधितं वर्तत एव । सम्भाषणसन्देशकृद्भिः यत् कार्यं सम्पन्नं तदेव अन्यैः कुतो न साधयितुं शक्यते?

खड्गं वा भवतु, लेखनी वा भवतु, छुरिका वा तिष्ठतु, विद्युन्मानोपकरणानि वा सन्तु नाम न किमपि उपकरणं साधु असाधु, उपयुक्तम् अनुपयुक्तं वा भवति स्वत एव । सर्वाणि करणानि कर्तारम् अपेक्षन्ते । कर्ता उपकरणं स्वार्थाय वा परोपकाराय वा समाजोद्धाराय वा यथाभिलषितं प्रयुङ्क्ते । अतः आधुनिकं तन्त्रज्ञानं संस्कृतस्य कृते मारकं वा अभिशापो वा नास्ति । वर एव भवति यदि सुष्ठु प्रयुज्यते । अतः संगणकं, DTP, Copier.. इत्यादिकं प्रयुज्य संस्कृतपत्रिकासञ्चालनं सुकरं भवति, सुन्दरं भवति, सत्कार्यमपि भवति ।

सर्वे यत्र विनेतारः सर्वे पण्डितमानिनः । सर्वे महत्त्वमिच्छन्ति तत् वृन्दम् अवसीदति ॥ इति सुभाषितं साम्प्रतिकान् संस्कृतज्ञानेव मनसि निधाय विरचितमिति मे प्रतिभाति । अयं दोषः संस्कृतं संस्कृतज्ञानपि अधः पातयन्नास्ते । यदि केचन लेखकाः, केचन ग्राहकाः, केचिन्मुद्रकाः, केऽपि धनपतयः, केचित् संस्कृतसेवासक्ताः भक्ताः वा प्रामाणिकरूपेण प्रयत्नान् विधास्यन्ति तदा संस्कृतपत्रिकाणां

भविष्यम् उज्ज्वलं भविष्यति एव । इंग्लिष्भाषा अस्माकं देशे द्विशतवर्षेभ्यः पूर्वं नासीत् । परमद्य का स्थितिः? यदन्यैः कृतं तदस्माभिरपि कर्तुं शक्यते । राजा कालस्य कारणं पूर्वकाले । अधुना प्रजा सर्वस्य कारणम् । यदि भारतीय-प्रजाः संस्कृतमुखाः भवन्ति, प्रजाप्रतिनिधयश्च संस्कृतविमुखाः न भवन्ति, संस्कृतज्ञाश्च सत्यमेव संस्कृतार्थं बद्धादराः दत्तचित्ताश्च भवन्ति तदा, तदैव केवलं, संस्कृतस्य संस्कृतपत्रिकाणामपि आगामिनि काले किमपि कृत्यं कर्तव्यं च अवशिष्यते । नो चेत् इतिहासपुस्तकेषु तु अस्माकं-संस्कृतस्य च-स्थानं स्थिरं स्थास्यति । वयमितिहासप्रियाः वा भविष्य-निर्मापकाः वा इति अस्माकं चरितं प्रमाणयति ।

जीयात् संस्कृतभारती ।
जीयात् संस्कृतपत्रिका ।
॥ जयतु भारतम् ॥

* * *

## स्वातन्त्र्यसंख्यसेनान्यौ

# सदाशिवदिवाकरौ

मुम्बई-महानगरस्य चौपाटी परिसरे इदानीं विद्यमानायां श्री गोकुलदास-तेजपाल-**संस्कृत-पाठशालायां** २८-१२-१८८५ तमे क्रिस्त दिनाङ्किते दिवसे दादाभाई नवरोजी, बदरुद्दीन तय्याब्जी, रङ्गय्य नायुडु, फिरोजशाह मेहता, नरेन्द्रनाथ सेन प्रभृतयः अलन् आक्टेवियन् ह्यूम् सदृशैः शिष्टैः सह मिलित्वा, संमन्त्र्य च भारत राष्ट्रीय कांग्रेस् (Indian National Congress) संस्थां स्थापितवन्तः ।

२८-१२-१८८५ तः दिनत्रयं यावत् सार्वजनिकम् अधिवेशनमपि मुम्बय्यामभवत् । तदुत्तरं च अन्यान्य-प्रदेशेषु कांग्रेस-अधिवेशनानि अभूवन् । लाला लाजपतराय, बाल गङ्गाधर तिलकः, बिपिनचन्द्रपाल (Lal-Bal-Pal) प्रभृतयः भारतस्य स्वातन्त्र्यं समवाप्तुं जनान् उद्बोधयितुं च प्रवृत्ताः । १८९७ तमे क्रिस्तवर्षे पुणेनगरे प्लेग् रोगः, तदवसरे प्राशासनिकाः अत्याचाराश्च अभवन् । १६-१०-१९०५ तमे दिवसे वङ्गविभजनं ब्रिटिषप्रशासनेन उद्घोषितमभूत् ।

गोपाल कृष्ण गोखले प्रभृतयः चिन्तकाः देशभक्ताः वङ्गविभजनं विरोधितवन्तः । षण्णां वर्षाणां कारावासात् अनन्तरं १९१४ तमे वर्षे बाल गङ्गाधर तिलकः मुक्तः अभूत् । तस्मिन् काले एव ऑनी बेसण्ट् नाम्नी विदेशी महिला होम् रूल लीग् नामक संस्थां संस्थापितवती । केसरी-मराठा इति पत्रिकाभ्यां तिलकः "स्वराज्यं मे जन्मसिद्धाधिकारः" इति सिंहगर्जनमकरोत् । प्रथमं जागतिकयुद्धमपि तदानीमेव १९१४ तमे वर्षे समारब्धम् ।

एतासां घटनानां प्राक् १८५७ तमे क्रिस्तवर्षे (२९-३-५७)

**मङ्गलपाण्डेनामा** सैनिकवर: ब्रिटिष् अधिकारिणं हत्वा स्वातन्त्र्य-समरस्य बीजावापं कृतवान् आसीत् । १०-५-१८५७ तमे दिवसे मराठी-सेना-गुल्मत: आरभ्य सेनाविप्लव: समारब्ध: । झांसीराज्ञी लक्ष्मीबाई प्रभृतय: मातृभूमे: रक्षणार्थं विदेशीयान् विरुध्य च युद्धमकार्षु: । परम् अत्र प्रजासु स्वातन्त्र्यमिति परिकल्पना न प्ररूढासीत् । धर्मविरुद्धं कृत्यं न वयं कुर्म इति मङ्गलपाण्डे तथा स्वस्वप्रदेशरक्षणार्थं लक्ष्मीबाई प्रभृतय: युद्धं विरोधं वा प्रादर्शयन् ।

वस्तुतस्तु आधुनिकीं प्राजातान्त्रिकीं प्राशासनिकपद्धतिं समानेतुं समाजस्य दोषान् अपसारयितुं च य: प्रयत्न: कृत: स: आंग्लशिक्षापद्धत्या शिक्षितानां केषाञ्चित् शिष्टानां चिन्तकानां देशभक्तानां कार्यमासीत् । अस्मिंश्च महाकर्मणि प्रजा: साधारणजना: अपि यथा भागं अगृह्णन् तदर्थं प्रेरणा प्रयत्न: फलप्राप्तिश्च **मोहनदास करमचन्द गान्धी**महोदयस्य महिमोत्कर्ष: वर्तते ।

सोऽयं महात्मा मो. क. गान्धी १९१५ तमे वर्षे दक्षिण-आफ्रिकात: भारतदेशं प्रतिनिवृत्त: आसीत् । ततश्च चम्पारण्यसत्याग्रह: तेन जनताया: कृते कृत: । तदुत्तरं च १९२० तमे वर्षे असहकार-आन्दोलनमारब्धम् । जलियनवाला बाग हत्याकाण्डेन, लवणकर - कारणात्, दाण्डीयात्रा-प्रकरणेन द्वितीययुद्धावसरे ब्रिटिशै: भारतसैनिका: अपि उपयुक्ता: इत्यादिहेतुभि: ९-८-४२ तमे दिवसे **'भारतं त्यजत'** इति आन्दोलनमभूत् । तदुत्तरं किं किमभूदिति सर्वे विदन्ति । अत्र मम विचार: एवमस्ति यत् स्वातन्त्र्यान्दोलनं केवलं स्वातन्त्र्यार्थमेव नासीत् परं समाजोद्धारार्थमपि । स्वातन्त्र्यान्दोलनं प्रजाभि:, केवलं महात्मगान्धिन: दक्षिणाफ्रिकात: प्रत्यागमनानन्तरमेव, स्वीकृतमिति च । ईदृशे राजकीय-सामाजिक-क्रान्ति-सन्दर्भे नानानेतृभि: नानादिशासु नैकविध: प्रयत्न: कृत: । स्वामी विवेकानन्द:, श्री राजा

राम मोहन रायः, स्वामी दयानन्द सरस्वती, श्री अरविन्द घोषः मदनमोहन मालवीयः इत्यादयः अन्यान्यक्षेत्रेषु स्वं स्वं सान्दर्भिकं कर्तव्यं निरवहन् । अतः केवलं राजकीयक्षेत्रे कृतभूरिपरिश्रमान् आश्रित्य वा आधारीकृत्य वा इतिहासः न रचनीयः । इतरेषु क्षेत्रेषु अपि पूरकतया कृतश्रमान् सगौरवं स्मरामो वयम् । यतः स्मृतियोग्या एव सन्ति एते महापुरुषाः ।

गान्धीमहोदयस्य प्रवेशानन्तरं अखण्डे भारते सर्वप्रदेशीयाः जनाः, सामान्यजनाः अपि, देशस्य स्वातन्त्र्यविषये समाजस्योद्धारार्थं च कटिबद्धा बभूवुः । पत्रिकाः, सार्वजनिकशिक्षणं, नीतिनिष्ठाः नेतारश्च जनान् साधु प्रेरितवन्तः बोधितवन्तश्च । यद्यपि सर्वविदितैः साधारणकारणैः समेषां लघूनां महतां च स्वातन्त्र्यवीराणां त्यागबलिदानसेवाकथाः समानरूपेण प्रसिद्धिं न गताः तथापि तत्तत्प्रदेशेषु सीमितक्षेत्रेषु तेषां चरितानि इदानीमपि सभक्तिश्रद्धं संकीर्त्यन्ते एव । अन्यान्यकारणैः समारब्धायां व्यक्तिपूजायामद्यत्वे चितानामेव केषाञ्चित् स्वातन्त्र्यसमारावधौ जीवितानां जनानां महिमा प्राशस्त्यं वा सर्वत्र जेगीयते । तत्रापि विशिष्य प्रशासनाधीनेषु शालापाठ्यग्रन्थेषु आकाशवाणी-दूरदर्शनप्रभृतिषु समूहसम्पर्कमाध्यमेषु च । इदानीं अपरापि प्रथा नवारब्धा यया इतिहासः प्रशासननीतिमनुसृत्य परिवर्त्यते ।

अतोऽहमिदानीम् अद्यतनीय-कर्णाटकराज्यस्य (पूर्वं मुम्बई प्रेसिडेन्सि इति विभागस्य) द्वयोः स्वातन्त्र्यसेनान्यो—ययोः परिचयः बहूनां न स्यात् प्रायः-जीवनचरितमधिकृत्य, कालसीमानमनुसृत्य किञ्चिदिव निवेदयितुमभिलषामि । तत्र एकस्य नामास्ति श्री कार्नाड सदाशिव राव इति । अपरस्य च अभिधानं श्री रङ्गनाथ दिवाकर इति । अनयोरेकः स्वातन्त्र्यावाप्तेः प्रागेव जीवनबन्धात् स्वतन्त्रोऽभूत् ।

अपरस्तु नितरां मे परिचित आसीत् बेङ्गलूरुनगरवासकारणात् तथा च भारतीयविद्याभवनस्य आधारस्तम्भेषु अन्यतमत्वाच्च ।

उभावपि एतौ महानुभावौ अधुनातन-महाराष्ट्र-राज्यस्य पुणे-मुम्बई नगराभ्यां सह सदा सम्बद्धौ, महात्मगान्धिनः भारत राष्ट्रीय कांग्रेस पक्षस्य च निष्ठावन्तौ अनुयायिनौ च अभूताम् । अद्यतनीय पाकिस्तान-बङ्गलादेशसहितस्य अखण्डबृहद्भारतस्य स्वातन्त्र्यार्थं ये प्राणान् समार्पयन् तान् अधुना कस्य राज्य-विशेषस्य प्रतिनिधीन् भावयामः? ईदृशी सङ्कुचिता दृष्टिः तेषामपचार एवेति मन्यतेऽयं जनः ।

## १. कार्नाड सदाशिव रावः

१८८१ तम-क्रिस्तवर्षस्य एप्रिलमासस्य प्रथमे दिवसे अथ चैत्र शुक्लप्रथमातिथौ दक्षिणकन्नडमण्डलान्तर्गतस्य मङ्गलूरु नाम्नि पत्तने श्री रामचन्द्र राव-श्रीमती राधाबाई दम्पत्योः पुत्रत्वेन श्री कार्नाड सदाशिव रावः जन्म लेभे । तस्मिन्नेव पुरे प्राथमिकशालाशिक्षणं परिसमाप्य मद्रासनगरं गत्वा (इदानीं चेन्नै इति नामान्तरं कृतमस्ति ।) प्रेसिडेन्सि महाविद्यालये लब्धपदवीको भूत्वा, मुम्बईनगरे विधि (Law) शिक्षणं गृहीत्वा, स्वस्थानं प्रत्यागत्य स्वपितेव न्यायवादी बभूव सदाशिव रावः । आगर्भश्रीमतः सदाशिवस्य ऐहिकी सम्पत् अनल्पा आसीत् । परिसरे विद्यमानस्य समाजस्य विषये यद्यसौ विचारं नाकरिष्यत् तदा स्वसम्पदा सुखेन स्वकं जीवनं यापयितुं समर्थः अभविष्यत् । परमीदृग्विधं जीवनं तस्य जन्मपत्रे न खलु लिखितमासीत् । अत एव सः स्वीयं सर्वस्वमपि समाजस्य कृते समर्प्य स्वयं दरिद्रः भूत्वा साधारणमनुजवत् जीवित्वा महात्मनो गान्धिनः अनुयायी अभवत् ।

२०-८-१९२० तमे क्रिस्त दिनाङ्के मङ्गलूरुं समागते महात्मगान्धिनि तस्मात् देशसेवादीक्षामग्रहीत् सदाशिवः । तदुत्तरं तत्कालीनाः देशभक्ता इव आजीवनं स्त्री-शिक्षणं, हरिजनोद्धारः, खादीप्रचारः, कांग्रेस सङ्घटनं, जातिभेद-निराकरणं, विधवा विवाहः, सामाजिक दोषनिर्मूलनम्... इत्यादिषु देशसेवाकर्मसु मग्न अभूत् । ब्रिटिषान् विरुध्य नैकवारं कारावासदण्डेन दण्डितः अभवत् । ईदृशेन कठोरपरिश्रमेण अनारोग्यमवाप्य स्वातन्त्र्यात् प्रागेव ९-१-१९३७ तमे दिवसे मुम्बय्यां अन्तिमश्वासमत्यजत् । यदा च गान्धी सदाशिवस्य मातरं सान्त्वयामास यथा "ईदृशस्य देशभक्तस्य मातृत्वे त्वमसि धन्या" इति ।

अङ्कुरं खलु सूचयति वर्धिष्यमाणं वृक्षकमित्युक्तिः कार्नाड सदाशिव रावस्य विषये यथार्था वर्तते पूर्णरूपेण । महात्मनो गान्धिनः अनुयायिनः सर्वेऽपि न खलु पूर्णरूपेण गान्धी-महोदयस्य आचार - विचार-व्यवहाराणामनुकरणं अकुर्वन् तदानीमपि । अधुना तु अनुक्तमेव वरम् । परं सदाशिवः गान्धीदीक्षायाः स्वीकारात् प्रागपि अर्थात् आबाल्यमपि समाजहितचिन्तकः करुणालुः अभूत् । तस्य जीवने ईदृशानि शतशोऽथ सहस्रशः घटनानि घटितानि यैः तस्य जीवनतत्त्वमधिगन्तुं शक्यते सुचारुरूपेण । एकः श्लाघ्यो विवस्वान् परहितनिरतायैव यस्य प्रयासः । परहितनिरतानामादरो नात्मकार्ये... इत्यादिसूक्तिभिः यत्तत्त्वम् उपदिष्टं तस्य अनुष्ठानं सदाशिव रावेण कृतम् । द्वित्राणि उदाहरणानि यथा—

१. बाल्ये एव सः स्वीयं पुस्तकं, उपरितनं वस्त्रमपि दीनाय दलिताय बालाय दत्वा गृहं गत्वा स्वकृत्यं न्यवेदयत् विनासङ्कोचं स्वपितृभ्यां पुरतः ।

२. तदानीन्तनकाले एव हरिजनान् स्वगृहमानाय्य तैः सह सहपंक्तिभोजनमकरोत् अयं विप्रकुलतिलकः ।

३. कर्णाटकप्रदेशे कांग्रेसपक्षस्य सङ्घटनमनेनैव आरब्धमभूत् । स्वगृहस्य बहिर्भागे एव तिलकविद्यालय इति शालामेकां स्थापितवान् ।

४. प्रवाहपीडितानां परिहारप्रदानकार्ये संलग्नोऽभूत् । अखिलकर्णाटकराजकीयपरिषदि अस्पृश्यतानिवारणार्थं निर्णयमेकं मण्डितवान् । तदनुष्ठानार्थं जनान् प्रैरयत् च ।

५. सिरसि, सिद्धापुर अङ्कोलाप्रभृतिषु स्थानेषु सत्याग्रहान् सङ्घटितवान् । करनिराकरणं लवणोत्पादनम् इत्यादिकं कर्णाटेषु कृतवान् । पञ्चवर्षपर्यन्तं कारावासेन दण्डितः सन् तत्र साधारणजनैः सह न्यवसत् विशिष्टव्यक्तित्वेन विशेषसौलभ्यं लभमानोऽपि तन्निराकरोत् ।

सदाशिवरावः स्वजीवितावधौ यद्यत् कार्यं सम्पादितवानिति अर्वाचीनेभ्यः निवेदयितुं तस्य साहसगाथां संरक्षितुमपि डॉ. सूर्यनाथ कामत नामा इतिहासज्ञः कन्नडभाषायां ग्रन्थमेकं विरचितवान् वर्तते । सदाशिवेन पुस्तकानि न प्रकाशितानि । तस्य जीवनमेव एकं मुक्तं पुस्तकं वर्तते । ईदृशाः महामहिमशालिनः नेतारः अद्यत्वे नैव वर्तन्ते इत्येव दुरवस्था ईदृशी अस्माकम् । सदाशिव राव-प्रभृतीनां जीवनचरितैः बहवः पाठाः अस्माभिः ज्ञातव्याः अनुष्ठेयाः प्रचारणीयाश्च इत्यत्र न स्यात् कस्यापि विमतिः । परोपदेशपाण्डित्यापेक्षया तत्त्वानुष्ठानं स्तोकमपि वरमेव ननु ।

मङ्गलूरुनगरं कर्णाटकराज्यमपि सदाशिव रावं न विस्मृतवत् । मङ्गलूरौ तस्य जन्मगृहस्य वीथिका ''देशभक्त कार्नाड सदाशिव राव वीथिका'' इति कृतनामधेया वर्तते । बेङ्गलूरुनगरस्य विस्तरणमेकं

सदाशिव नगरमिति नाम वहति च । परं निर्वेदस्य विषयस्तु सदाशिवनगरे विद्यमानाः सर्वेऽपि धनिनः शासकाः सांसदाः वाणिज्य-उद्यमपतयः एव वर्तन्ते । साधारणजनतायाः योगक्षेमविषये तेषां त्यागबलिदान-विषयः अनुसन्धानयोग्यः इत्येव अहं मन्ये । काशीगमनमात्रेण नान्नंभट्टायते द्विजः । सदाशिवनगरे कृतवसतित्वेनैव जनहितचिन्तकः न स्यात् शासकवरः इत्यलं पल्लवितेन ।

## २. डॉ।। रङ्गनाथ रामचन्द्र दिवाकरः

३०-९-१८९४ तमे दिवसे रङ्गनाथस्य जन्म अभूत् धारवाडनगरस्य समीपे मदिहाळे इत्यत्र । अस्य पितुः नाम रामचन्द्र । मातुश्च सीताबाई इति । रेलविभागे कर्मकरः पिता धनविहीनोऽपि सर्वेभ्यः अपत्येभ्यः विद्यां सुष्ठु प्रदापितवान् ।

बालकः रङ्गनाथः बेळगांव नगरे प्राथमिकशिक्षणं प्रिपरेटरिशालायां लब्धवान् । तत्र देशभक्तेः पाठाः अपि दीयन्ते स्म । गृहे अमृतबझारपत्रिका, केसरी, काळ, भाला– इति पत्रिकाः स्वीक्रियन्ते स्म । अतिरिक्ततया च रङ्गनाथः मित्रैः सह मिलित्वा 'वन्देमातरम्'' 'कर्मयोगिन्' इति पत्रिके अपि पठन्नासीत् । ततश्च हुबलीनगरं प्रति पितुः कर्मपरिवर्तनमभूत् । तत्र ल्यामिंग्टन् शालां प्रविष्टः देशभक्तेः विषये नितरां निष्णातोऽभवत् रङ्गनाथः । तदानीं बालगङ्गाधरतिलकः ब्रह्मदेशे कारावासेन दण्डितः । विद्यार्थी रङ्गनाथोऽपि दिनं यावत् शालाबहिष्कारं कृत्वा दण्डं लेभे ।

मेट्रिक् उत्तीर्णतायाः अनन्तरं रङ्गनाथः स्नातकपदवीं प्राप्तुं पुणेनगरस्य फर्ग्युसन् महाविद्यालयमगच्छत् । तत्र तु देशभक्तेरेव आवरणमासीत् । तिलकः यदा कारावासं परिसमाप्य पुण्यपत्तनं

प्रत्यागत: तदा रङ्गनाथ: अपि तं सन्दृश्य देशसेवाव्रतं स्वीकृतवान् । रामकृष्ण परमहंस:, विवेकानन्द:, अरविन्द: इत्यादीनां जीवितोपदेशै: प्रभावितोऽयं संस्कृतांग्लभाषे पठित्वा बि.ए. (आनर्स्) पदवीं प्राप । कञ्चित्कालं धारवाडे शिक्षको भूत्वा तिलकविचार धारां वहन् स्वोद्योगं परित्यज्य मुम्बईं गत्वा एं.ए. एल्. एल्. बि. परीक्षासु उत्तीर्णोऽभवत् । परं न्यायवादिन: कर्म अकुर्वन् देशसेवाकर्मणि आत्मानं न्यमज्जयत् रङ्गनाथो दिवाकर: । तदानीं कोल्हापुरे राजाराम महाविद्यालये आंग्लभाषाप्राध्यापकत्वं स्व्यकरोत् ।

१९२० तमे वर्षे कांग्रेसपक्ष: नागपुराधिवेशने असहकारान्दोलनार्थं आह्वानमयच्छत् । आबाल्यं पत्रिकापठनेन प्रभावित: रङ्गनाथ: जनानुद्बोधयितुं कन्नड भाषायां **'कर्मवीर'** नाम्नीं पत्रिकां प्रारभत १५-२-१९२१ तमे दिवसे । पत्रकाररूपेण देशसेवाबद्धदीक्ष: रङ्गनाथ: विचारप्रचोदकै: असंख्यलेखै: जनजागृतिं कृतवान् । अनेनैव कारणेन बहुवारं कारावासेन दण्डितोऽभूच्च । १९२२ तमे वर्षे महात्मगान्धिन: प्रतिवेशी अभूत् यरवडा कारागारे । तदानीं गान्धीमहोदयेन नितरां प्रेरित: अभवत् असौ रङ्गनाथ: ।

कर्नाटककांग्रेस समिते: अध्यक्षस्थाने स्थित: रङ्गनाथ दिवाकर: करनिराकरणान्दोलनं कृत्वा ९-४-१९३१ तमे दिवसे तदानीन्तन-आयुक्तेन W. Smutts नाम्ना ब्रिटिषाधिकारिणा सह समयमेकं कृतवान् । अनेन शिरसि-सिद्धापुरयो: कृषकेभ्य: अनुकूलता अभूत् । स: समय: 'स्मट्स्-दिवाकर-समय:' इति अद्यापि प्रसिद्धोऽस्ति । 'भारतं त्यजत' इत्यादिषु सर्वसत्याग्रहेषु भागभाक् रङ्गनाथ: छद्मवेषेण सञ्चरन् लेखान् प्रकटयन् भटान् निवारयन् कर्मनिरतोऽभूत् । राजकीयभटा: अस्य शिरसे ५००० रूप्यकाणां मूल्यं घोषितवन्त: आसन् सकृत् ।

भूगतसत्याग्रही भूत्वा रङ्गनाथः देशे सर्वत्र समचरत् । कारागारे स्थितः बहून् ग्रन्थान् अलिखत् । महात्मगान्धिनः पञ्चसप्ततितमवर्षाभिनन्दनावसरे सम्भावनाग्रन्थं सम्पादितवान् । नवशक्तिरिति इंग्लिष् साप्ताहिकपत्रिकां, **संयुक्तकर्नाटक** इति कन्नड दैनिकीं च प्रकटितवान् । कर्नाटक-एकीकरणार्थं प्रायतत च । कन्नडसाहित्यसम्मलेनाध्यक्षः अयं संविधानरचनसमितेः सदस्यः अपि अभूत् । स्वतन्त्रभारतस्य आकाशवाणी-समाचार शाखायाः मन्त्री ततः बिहारराज्यपालः इति कार्यभारं निरवहत् । राज्यपालपदात् निवृत्तः गान्धीस्मारकनिधेः अध्यक्षः ततः गान्धी शान्ति प्रतिष्ठानस्य अध्यक्षः इत्यादिस्थानानि अलञ्चकार । विदेशप्रयाणं विधाय अण्वस्त्रप्रतिबन्ध प्रतिपादनार्थं जान् एफ्. केनडि महोदयेन सह मिलितवान् । १९८७ तमे वर्षे पञ्जाबराज्ये शान्तियात्रामकरोत् । १५-१-९० तमे दिवसे घटप्रभायाः चिकित्सालये परं धाम प्रपेदे च ।

डॉ. रङ्गनाथ दिवाकरस्य साहित्यसेवा महती वर्तते । भारतीय विद्याभवनस्य पुस्तकविश्वविद्यालयस्य सहसम्पादकः अयं डॉ. के.एम्. मुनशी महोदयेन सह विद्याभवनस्य संवर्धने बहुप्रयतितवान् । कन्नड-आंग्लभाषयोः बहून् ग्रन्थान् अलिखत् ।

भारतीय विद्याभवनात् प्रकाशितानामांग्लभाषा-ग्रन्थानां नामानि— (1) Bhagavan Buddha, (2) Upanishads in Story and Dialogue, (3) Mahayogi: Life, Sadhanas and Philosophy, (4) Gandhiji's Basic Ideals and Some Modern Problems, (5) Gandhiji's Life, Thought and Philosophy, (6) Gandhiji the spiritual seeker, (7) Paramahamsa Sri Ramakrishna, (8) Gandhiji- a practical philosopher, (9) Is not Gandhiji the Answer, (10) Gandhiji's triple message, (11) Saga of Satyagraha and

(12) Some states of consciousness.

इतरग्रन्थेषु (1) Glimpses of Gandhiji इत्यस्मै सरदार वल्लभभाई पटेल महोदयैः प्राक्कथनं लिखितमस्ति । (2) My encounter with Gandhiji, (3) Satyagraha-Pathway to Peace, (4) Satyagraha its history and technique (5) What is Action, (6) Karnataka through the Ages इत्यस्य सम्पादनमपि रङ्गनाथैः कृतम् ।

डॉ. रङ्गनाथ दिवाकराणां कन्नडग्रन्थानां केषाञ्चित् नामानि एवम्— (१) उपनिषत् प्रकाशः (२) उपनिषत्कथावली (३) गीतेय गुट्टु (४) अन्तरात्मनिगे (५) हरिभक्ति सुधा (६) नारद-शाण्डिल्यभक्ति सूत्राणि (७) वचनशास्त्ररहस्यम् (८) सत्याग्रह इतिहास मत्तु तन्त्र (९) महात्मर मनोरंग, (१०) गान्धीजि नानु कण्डन्ते (११) गान्धी कतेगळु (१२) बापु (१३) सेरेय मरेयल्लि (१४) हळ्ळिगर कैपिडि (१५) रामकृष्ण परमहंस (१६) अरविन्द महायोगि (१७) विश्वमेध (१८) करनिराकरणेय वीरकथे (१९) कर्नाटक एकीकरण कथे (२०) वीरकर्मद प्रेरणे इत्यादीत्यादि । एतेषां नामधेयान्येव दिवाकराणां विचारधाटीं प्रकटयन्ति । केचन ग्रन्थाः हिन्दी भाषायामपि अनूदितास्सन्ति । स्वीये जीविते ९६ तमे वर्षे मरणपर्यन्तं रङ्गनाथदिवाकरः सक्रिय आसीत् । बेङ्गलूरु नगरे तैः सह संल्लापं कर्तुं ममापि अवसराः लब्धाः बहवः ।

श्री आर्. के. जोशी महोदयैः लिखितं भारतीय विद्याभवनस्य बेंगलूरुकेन्द्रात् प्रकाशितं '**कर्मवीर दिवाकर**' इतीदं नूतनं पुस्तकं रङ्गनाथ दिवाकराणां बहुमुखव्यक्तित्वं नैकविधां सेवामपि सुष्ठु परिचाययति ।

स्वतन्त्रभारतस्य सुवर्णोत्सवर्षसमारम्भे यदि वयं अस्माकं अभिनवान् नेतॄन् अधिकृत्य चिन्तयामः तदा नितरां विषण्णाः हीनाः दीनाः व्यग्राः उग्राः व्यथिताः कुपिताः खिन्नाः वा अवश्यं भवामः । 'महाजनो येन गतः स पन्थाः' इति सूक्तिम् अनुसृत्य यदि गम्यते समाजध्वंसः भविता । अतः एव ईदृशे विषमसन्दर्भे स्फूर्तिंप्रेरणाम् आदर्शमपि अवाप्तुं स्वातन्त्र्यसमरवीराणां चरितानि ज्ञेयानि अध्येयानि अनुसर्तव्यानि चेति निश्चिता मे मतिः ।

मानवेतिहासे अतिश्रेष्ठाः स्मरणयोग्याः बहवः महापुरुषाः भारतदेशे समुत्पन्नाः आबहोः कालात् । अनतिप्रागपि अस्माभिः गोखले-तिलक-मालवीय- गान्धीप्रभृतयः साक्षात्कृताः । पुनः पुनः तादृशानाम् आदर्शपुरुषाणां जीवनचरितस्य पठनं स्मरणं तथा च अनुसरणमेव तारकमन्त्रः भवतु इति पुनः पुनः निवेद्य लघु लेखमिममुपसंहरामि ।

**॥ जयतु भारतम् । जयतु संस्कृतम् ॥**

२६-७-९७

* * *

# भगवत्सङ्कल्पः

सर्वेऽपि ते त्रयः भ्रातरः श्रीकृष्णजन्मष्टमीपर्वणः प्रागेव तत्र अवश्यम् उपस्थातुम् अङ्गीकृतवन्तः । 'तस्मिन्नेव अवसरे कुत' इति कश्चित् कुतूहली पृष्टवांश्चेत् अस्य प्रश्नस्य समाधानकरम् उत्तरं प्रदातुं त एव प्रभवन्ति स्म समानोदराः । आबाल्यात् येभ्यः तेषां परिचितिरासीत् ते पुनः न किमपि चित्रं प्रपश्यन्ति स्म इतीदं विदितमेव समेषाम् ।

शतद्वय-सार्धशतद्वयसंवत्सरेभ्यः पूर्वं कदाचित् अमीषां प्रपितामहैः निर्मापितस्य तस्यैव श्रीकृष्णभगवतः लघुदेवायतनस्य परिसरप्रान्त एव एतैः सोदरैः स्वीयं जन्म सम्प्राप्तं, शैशवं सुष्ठु यापितं, स्वास्थ्येन सह संवृद्धमपि । श्रीकृष्णप्रभुरेव खलु सर्वेषामेषां योगक्षेमाभिवृद्धिविनाशानां साक्षी शतशतवत्सरेभ्यः । तस्मात् भगवतः कदापि किञ्चिदपि किमेते गूहितवन्तः भ्रातृबान्धवाः? अथवा दैवद्रोहविरोधं परिहृत्य वास्तविकरूपेण वर्णनीयं चेत् किं न जानाति स भगवान् यदेतैः एतद्वंशीयैरपि कृतं प्राक्तनं सकलं कर्म? अतः सम्प्रति किं कैरपि ईषदपि विस्मितैर्भाव्यं यदि ते वदन्ति यत् सर्वेऽपि भ्रातरः 'स्वपैतृकस्य प्राचीनजीर्णगृहस्य विक्रयात् पूर्वं तस्मै मुकुन्दपुरस्य मुरलीलोलाय भगवते यत्किमपि निवेदयितुं समर्पयितुं वा' अत्र समायाता इति ।

मुकुन्दपुरनामकः सोऽयं लघुग्रामः केरलराज्यस्य उत्तरमलबारप्रदेशे विद्यते । यद्यपि केरलं राज्यं वृत्तपत्रेषु प्रत्यहं वृत्तान्तविशेषमावहति प्रतिदिनं प्रवर्धमानैः अपराधैः, रोचकैः नर्मोक्तिजकैः समाचारैः, राजकारणवृत्तान्तैः, आखातदेशेभ्यः वर्षद्भिः

धनराशिभिरपि, (मुकुन्दपुरं तु न प्रथितम्), एतेषां सोदराणाम् आसक्तिरेव नासीत् तादृशेषु उदन्तेषु । अत्र दोषोऽपि न गवेषणीयः यतस्ते सहोदराः सर्वेऽपि अतीतषष्टिवर्षाः वृद्धाः । एषु प्रथमः गोविन्दः सप्ततिवर्षीयः अभवत् । अतः इमान् कृष्णभक्तान् सतृष्णान् वर्णयितुमुचितम् । अन्यथा कुतो वा एतेऽत्र धावनमकुर्वन् 'एतेषां पतत्पैतृकवासस्थानाय कतिचिल्लक्षरूप्यकाणि प्रदातुं सिद्धोऽस्मीति' उक्तमात्रे एव कस्मिंश्चित् धनिकवराके? सुष्ठु यदि स्मर्यते आसीत् ईदृशोऽपि कश्चिदवसरः पूर्वं यदा एतैरेव भूसुरसोदरैः 'देवस्य पुरतः प्रत्यहं प्रदीपं प्रज्वालयितुं' कोऽपि मनुजपशुः हताशतया अन्विष्टः, न लब्धश्च यस्य कृते विनाभाटकम् उषितुं तदेव गृहं समर्पयितुं सिद्धा आसन् एते । तत्सर्वमधुना विस्मृतमेव । संप्रति तेषां ध्यानं सर्वमपि आखातदेशस्थितेन धनिकेन क्रयकारणात् प्रदास्यमानं धनं कवलयितुं केवलम् ।

तरुवृक्षगुल्मलतानां मध्ये विराजमानमिदं गोकुलनामकं गृहं सर्वप्रकारकैः शब्दोपद्व्यापैः सुदूरे स्थितमासीत् । अयसः अपेक्षया दारुफलकान्येव अधिकप्रमाणेन प्रयुक्तानि आसन् अस्य निर्माणे । वास्तुसौन्दर्यदृष्ट्या तु महाभवनमिदं केनचित् युरोपीयक्रिस्तालयेन वा, आखातदेशीयेन मस्जिदेन वा, न न - चोलराजकालीनेन मन्दिरेण सह तुलनामर्हति स्म । इदमेतावत् लम्बम् आयतं च आसीत् यदत्र एकवारे एव पञ्चशत-पञ्चजनेभ्यः भोजनं परिवेषयितुं शक्यते स्म । ईदृशेऽस्मिन् गृहे वासमात्रमपि सामाजिकप्रतिष्ठां प्रवर्धयति स्म पुरुषविशेषेभ्यः । अत्र च भवने धान्यभाण्डारमपि एकमासीत् - वापीमनुकुर्वतः यस्य अधस्तलं न केनापि स्पृष्टमासीत् । दृढं खलु इदं स्मर्यते यत् न कदाचिदपि इदं रिक्तं कृतम्, अभूद्वा । अतः खलु जनाः कथयन्ति स्म यदस्य गृहस्य भोज्यवस्तुभाण्डारः अद्यतनीय-सप्ततारांङ्कितानां

गगनचुम्बिप्रवासिगृहाणां प्रकोष्ठानामपेक्षयापि महान् इति । अस्य महानसं दृष्ट्वा, अनुक्तमात्रेऽपि सर्वैः स्पष्टं ज्ञायते स्म यदत्र पूर्वं कियन्तो जनाः (महिलाः, पुरुषाः, शिशवः, पशवः, कर्मकराश्च) वसन्ति स्म इति ।

नवदेहलीतः स्वकं ग्रामं प्रति गच्छन् गोविन्दः व्योमयानेऽपि स्वीयं बाल्यं स्मारं स्मारं सुखमनुभवति स्म स्वस्मिन्नेव । विद्युत्सौलभ्यविहीने तस्मिन् काले, अन्धकारपरिपूर्णे बृहत्प्रकोष्ठे प्रघाणे वा, तैलदीपिकायाः पुरतः स्वमाता श्रीकृष्णभगवतः विविधानि स्तोत्राणि कण्ठगतं कारयितुं कथं पाठयति स्म मन्दमन्देन ध्वनिनेति -

**अच्युतं केशवं रामनारायणं**
**कृष्ण-दामोदरं वासुदेवं हरिम् ।**
**श्रीधरं माधवं गोपिकावल्लभं**
**जानकीनायकं रामचन्द्रं भजे ॥**

इदमपि स गोविन्दः स्मृतवान् यत्सः बाल्ये स्वयं स्वभ्रातरौ च पर्यायतया प्रतिदिनं पुष्पाणि अपचित्य, संगृह्य, मालां कृत्वा, भगवते - स्वीयाय भगवते - स्वस्य पूर्वजैः प्रतिष्ठापितस्य श्रीकृष्णस्य प्रतिमायाः कृते समर्पयितुम् अहमहमिकया मन्दिरं प्रति कथं धावन्ति स्म इति । कदाचिच्च सः किमपि पठितुम् इच्छन् स्वीयनित्यकर्मणः विरामं ग्रहीतुम् ऐच्छत् । तदा माता सकोपं सभ्रूभङ्गमिमं भर्त्सितवती । ततः सः पुष्पवाटिकां धावितवान्... तद् दृश्यमपि अद्य तस्य स्मृतिपटले प्रत्यागतमभूत् ।

मध्यमो भ्राता अच्युतश्च स्वकीयेन तैलशकटेन चेन्नैतः प्रस्थितः । तस्यापि स्वान्ते प्राचीनानि स्मरणानि-बाल्यकालस्य अनुभवाः प्रादुरभवन् पुनः पुनः । गृहोद्यानं तस्य प्रियतमः प्रदेश आसीत् । अतः कृत्वैव सः चेन्नैपुर्यामपि अलिन्दे पुष्पवाटिकाम् अकरोत् । माता पुत्रेभ्यः

सस्यारोपणार्थं उद्यानक्षेत्रं विभज्य ददाति स्म । अच्युतस्य तु क्षेत्रं पुष्पैः फलैः वृन्ताक-उर्वारुक-आलुका-टमाटो-सर्षप-मूलिकादिभिः शाकैः सर्वदा अधिकं सुन्दरं शोभते स्म निरपवादतया । एवमेव कदाचित् अपवादार्थमिव अपेक्षितप्रमाणे फलोत्पत्तिः नाभवत् । अच्युतस्य दुःखं वर्णनातीतम् । तदानीं निद्राहारौ त्यक्त्वा रुदन्तं बालं माता वात्सल्येन समाश्वास्य मधुरखाद्यानि भोजयित्वा कथाः कथयन्ती निद्रां नीतवती आसीत् । स्वमातुः स्मरणमात्रेणैव अच्युतस्य अक्षिणी अश्रुपूर्णे अभूताम् । स्तब्धादपि कण्ठात् कथमपि निरसारयत् निनादः-

**वसुदेवसुतं देवं**
**कंसचाणूरमर्दनम् ।**
**देवकीपरमानन्दं**
**कृष्णं वन्दे जगद्गुरुम् ॥**

कनिष्ठो भ्राता केशवः मुम्बईतः प्रस्थाय स्वपुरं प्राप्तवान् पट्टिकाशकटेन (TRAIN) । प्रवासः न तावान् सुखकरः आसीत् विशिष्य च पालघट्टात् अनन्तरं बस्-यानेन ससंमर्दमेव यातव्यत्वात् । प्रस्थितमात्रे एव लोकयाने वृष्टिर्वर्षितुमारेभे । कुम्भद्रोणेऽस्मिन् धारासम्पाते प्राशासनिकं प्राचीनं लघुवाहनं स्खलत्-स्खलत् नतोन्नतभूमिभागेषु मन्दं मन्दं चलत्, क्वचित्क्वचिदपि वीथीं विहाय पतदुत्पतत् गच्छदासीत् मनुजपशून् वहत् । सर्पाकारे मार्गे सकृत् घट्टनात् केचन यात्रिणः पङ्के न्यपतन् भग्नद्वाराभ्यां वातायनेभ्यश्च । सदाकालं केशवस्तु एकमेव कार्यं कुरुते स्म भगवतो ध्यान-सङ्कीर्तनरूपं "हे कृष्ण रक्षस्व माम्" इति । न जाने कियद्वारं सः विष्णुसहस्रनामस्तोत्रं **जप्तवान्** स्यात् इति । त्रिषु भ्रातृषु केशवाय भगवति महती श्रद्धा । सा अचला दृढा शाश्वती च ।

त्रयोऽपि वृद्धभ्रातरः मध्याह्नवेलायां स्वीये पैतृकगृहे गोकुले

सम्मिलिता: अभूवन् एकैकश: । गृहरक्षाकर्मणि नियुक्त: कर्मकर: खाद्यपानादिव्यवस्थां सर्वां सुष्ठु सज्जीकृतवानासीत् । चिरादागता: गृहस्वामिन: इति प्रीत्यैव स: परिवेषणावसरे मध्ये मध्ये व्याख्यानसेवामपि विदधाति स्म - "इदं पनसं...तस्मात् वृक्षात्, आम्रफलानि जीर्णवृक्षात्, कदलीफलानि गृहवाटिकात: एव सद्यो निष्कासितानि । अस्मिन् वर्षे गृहवृक्षेषु एव अधिकं श्रीफलं निष्पन्नम् । नारिकेलफलानां विक्रयापेक्षया तेभ्य: तैलमेव निष्पादितं मया । तस्मादेव तैलात् भर्जितमस्ति अद्यतनीयं पर्पटादिकम्..." इत्यादिरूपेण ।

भ्रातर: सुग्रासभोजनमिदम् आकण्ठम् अखादन्, सत्यं बहो: कालादनन्तरं यत: चिरात् खलु एते स्वग्रामं समायाता: ग्राम्यं मिष्टमश्नातुम् । गुरुभोजनात् प्रयाणायासात् आलस्यादपि स्तोकमिव सुप्त्वा विश्रम्य पुनरुत्थिता: शुचयो भूत्वा समीपस्थं देवालयं ते गता: भगवन्तं द्रष्टुम् । परेद्यवि प्रातरेव गृहविक्रय-विषये अन्तिमो निर्णय: स्वीकर्तव्य आसीत् ।

मुकुन्दमन्दिरस्य तु दुरवस्था आसीत् । प्राकारा: भग्नप्राया: । पादसरणिरपि न खलु चलनयोग्या । गर्भगृहे तु मन्द: कोऽपि पीत: प्रकाश: नि:स्नेहात् दीपात् श्रीकृष्णमूर्ते: उपरि पतति स्म । प्राचीना कापि मृत्तिका-प्रणति: वर्त्तिकारहिता क्वचित् प्रक्षिप्ता । दीन: दुर्बल: दरिद्रश्च कश्चित् विप्रवराक: पूजापाठादिकं प्रत्यहं कुरुते स्म इति तै: कथमपि विदितमनन्तरमेव । स च अर्चक: ग्रामशालायाम् अध्यापकोऽपि आसीत् इति सेवको अवदत् । मन्दिरस्य दुर्गन्ध: नासारन्ध्रं पिहितवान् । ऊर्णनाभीनां तन्तुजालै: पारावतानां चटकानां जतुकानां कृमिकीटादीनां मलविसर्जनादपि तत्र चिरं स्थातुं न शक्यते स्म ।

भ्रातृभूपा: त्रयोऽपि शुद्धशुक्लकौशेयपरिधानै: कृतवेष्टना:

चक्षूंषि निमील्य स्व-स्व-प्रार्थनासु निमग्ना अभूवन् । श्रीकृष्णस्तु साक्षित्वेन अतिष्ठत् निष्पन्दतयैव, न जाने किमु तूष्णीक इति ।

भगवांस्तु ज्येष्ठं गोविन्दं दृष्ट्वा परिहसतीव प्रत्यभासत तस्मै- ''आ! एवं त्वमद्य प्रतिनिवृत्तोऽसि । इदं ते अन्तिमं दर्शनमस्ति ननु । स्मर किञ्चित् इतः पूर्वं त्वं कदा समागतवानिति । तदा तव परीक्षा समाप्ता आसीत् । परिणामश्च न उद्घोषितः । त्वम् उत्तीर्णतार्थं मां प्रार्थितवान् आसीः । सकृत् घोषिते परिणामे त्वमितः धावन् प्रस्थितोऽभूः । मत्सकाशात् यदा किमपि ईहसे त्वमत्र उपस्थितो भवसि खलु । स्मर सम्यक् यत् त्वमिदानीं वृद्धः विधुरः अप्यसि । न खलु चिरं जीवसि सहजतया । तावत्कालमपि मत्तः दूरे यापयितुमिच्छसि?''

अच्युतः भगवता सह मुखप्रतिमुखरूपेण अस्मीति अनुभवविशेषम् आप्तवान् । भगवान् तस्मै एवम् अवदत् - ''त्वमपि पलायितुं प्रयतसे अच्युत? कुत्र नु खलु प्रस्थितोऽसि? स्मर तानि प्राक्तनानि दिनानि यदा निरुद्योगः त्वां बाधते स्म । त्वं तदानीम् उद्योगार्थं प्रार्थनां कृतवान् । अहं ते ईप्सितः तदा । अद्य पुनः मां विस्मर्तुमिच्छसि निवृत्तेरनन्तरम् । इदं किल स्वमनसि सदा चिन्तयसि यदहं त्वया सह सर्वदा अस्मि इति । परं कथय प्रामाणिकरूपेण नगरं किं तावतीं शान्तिं ते प्रयच्छति या पूर्वं ग्रामे तव आसीत्?''

केशवस्तु भगवतः पुरतः स्खलितपदः अभवत् । लोकयानप्रयाणलब्धान्तप्रियः प्रयासः नाद्यापि अपगतः आसीदस्य । ''केशव, साधु संस्मर ईषदिव । मयि विश्वस्य त्वं त्वदीयाः अन्तरङ्गभावनाः निवेदयसि स्म ननु । तस्यां कन्यायाम् अनुरक्त आसीः यामेव अनन्तरं परिणीतवान् । परं विवाहात् प्राक् किं किं न निवेद्यते स्म निगूह्य मयि, किमु विस्मृतम्? अद्य अहं ते अनुपयुक्तः स्यां नाम

। तथापि कथमिव त्वं न लज्जसे कृतपूर्वेभ्यः अपराधेभ्यः?''

कञ्चित्समयं तत्र प्रार्थनां विधाय स्वगृहं प्रतिनिवृत्ताः भ्रातरः सर्वे तूष्णीकाः । दर्दुररटनमेव श्रूयते स्म केवलं गृहगमनवीथिकायां विद्यमाने मण्डूकगर्ते । गृहस्य प्रघाणे मन्दः प्रकाशः निःसृतः प्रसृतः आसीत् विद्युद्दीपात् ।

वरण्डके उपविष्टः गोविन्दः नाम्ना आकारितवान् उभौ अनुजौ । उक्तवांश्च दीर्घं निःश्वस्य मृदुमधुरमन्देन वृद्धध्वनिना - ''गृह - विक्रयविषये पुनर्विचारं कुर्वाणोऽस्मि अहम् । यदि उभयोरपि अभिमतं तर्हि धनिकेन प्रदास्यमानम् अर्थजातम् अहमेव युवाभ्यां दास्यामि । निजजीवितस्य चरमकालं 'गोकुले' एव यापयितुमिच्छाम्यहम् ।''

सपदि भ्रातरौ प्रत्यवदताम् - ''न न भ्रातः । आवां त्वया सह तिष्ठावः । गृहविक्रयः न खलु आवयोः अभिमतः । वयं त्रयोऽपि अत्रैव प्रतिनिवर्तामहे । नूतनं गृहं निर्मास्यामः । भक्त्या भगवन्तं जगन्नाथं पूजयन्तः अवशिष्टं जीवितम् अत्रैव यापयामः ।''

रात्रौ निद्रायां तैः अनुभूतं यत् मुकुन्दपुरस्य भगवान् मुरलीं वादयन् निखिलमपि जगत् निनादेन पूरयति स्म ॥

* * *

# अतिथिः पाचकोऽथवा

स्वस्वप्रदेशात् बहिर्गतः सर्वोऽपि जनः स्वीयविद्या--योग्यता परिस्थिति - कार्यानुगुणं नूतनं कमपि अनुभवविशेषं प्राप्नोति नियतरूपेण। एवमेव कदाचित् **'मेक्सिको'** नाम्नि नगरे विद्यमानस्य ममापि बहवः चित्रविचित्रा अनुभवाः जाताः येषां मध्ये अन्यतमः एवमस्ति ।

अहमस्मि आबाल्यात् शाकतण्डुलफलाहारी विप्रवराकः । पक्वोऽपि कन्दर्पः न मे प्रियतमः । लशुनस्य गन्धः दूरतः परिह्रियते मया। वीथीषु कदलीभक्षणमपि न मे रोचते इति चेत् पानीपूरी-भेलपूरी-चाटादीनाम् अवसर एव नास्ति मम कुक्षिप्रवेशार्थम्। अहं मादकपेयानि न पिबामि । धूमवर्त्तिकाः न सेवे च । वस्तुतस्तु अद्यत्वे प्रगतानाम् नैकेषाम् आधुनिक भारतीय स्त्रीपुरुषाणां बहवः ''कल्याणगुणाः'' न मयि वर्तन्ते इत्यतः प्राग्गतं पुरुषं परिगणयन्ति निजनगरनिवासिनो माम् । ईदृशः कालातीतः (Outdated) कश्चन प्राणिविशेषः अयं जनः दैवेन दूरस्थिते मांसभक्षिप्रदेशे वर्षद्वयं यावत् वासदण्डम् अन्वभवत् एकाकी अकुटुम्बः संस्कृतसेवकः संस्कृतिप्रतिनिधिरूपेण ।

मेक्सिकोजनाः वयमिव साधवः, यद्यपि मयि सादृश्यापेक्षया वैदृश्यमेव अधिकम् अधिगतं तैः सर्वभक्षकैः सागरपायिभिः नृत्यरसिकैः कृत्यरहितैः पुम्भिः (पुंश्चलीभिश्च) कैश्चित् । तेषामभिप्राये अहमासम् अतीव विचित्रः कोऽपि 'मनुजपशुः' । अतस्तेभ्यः गौरवापेक्षया कुतूहलमेव अधिकं मयि । मदीयः आचारः विचारः आहारः व्यवहारः सर्वोऽपि वार्ताविशेषः तेषाम्। मम गौरवार्थम् (अयमेकः मे अध्यासः एव मूलाविद्यामपि अतीतः) बहुभिः मित्रैः, शिष्यैः, सबलाभिः अबलाजनैश्च अहम् आसम् असकृत् आहूतः

आहारस्वीकारार्थम् । पानार्थं नृत्यार्थं कूटक्रीडार्थं वा अहं सर्वथा अयोग्य इति सर्वप्रथमं मयैव सूच्यमानत्वात् तादृशसेवा सन्दर्भेषु स्वागतयितुं साहसं न कृतं तैः (भारतस्थानां भार्यापत्यकानां मे पुण्येन प्रायः) । तथापि अनिच्छन्तमपि मां तदा तदा भोजनार्थम् अवश्यम् आह्वयन्ति स्म, न न आकृष्य नयन्ति स्म इत्येव वक्तुमुचितम् । दूरदेशादागतः तरुणो विद्वान् गुरुः गृहं पवित्रयति स्वपादन्यासैः इति अवसरविशेषं मन्यन्ते स्म तत्रत्याः भावुकाः भ्रातरः भगिन्यश्च (यस्य च दुरुपयोगः प्रकारान्तरेण स्वीक्रियते स्म मया संस्कृतकार्यार्थम् ) ।

आहारार्थम् (अन्यकार्यार्थं वा) आह्वानम् अङ्गीकर्तुम् अनङ्गीकर्तुम् अन्यथा परिवर्तयितुमपि अस्ति खलु अधिकारः अतिथिविशेषस्य (अर्थात् अपूर्वपुरुषस्य पूर्वदेशीयस्य मम) । अतः आदावेव अहं विनयपूर्वकं वदामि स्म निरपत्रपः निरपवादतया - "अयि भोः मित्रमधुपाः! कुतो वा माम् आह्वयथ? अहमस्मि अपानकः अखादकः अनर्तकः अक्रीडकः अल्पपुरुषः । भोजनप्रियस्यापि (ब्राह्मणस्यापीति यावत्) मम भोजनदानेन युष्मभ्यं पुण्यमपि नायाति, पापमपि नो याति, पुरुषार्थो न सिध्यति (पत्नीव्रतोऽहं, न स्त्री च) । मम आशिषः (नाहं श्री श्री श्री... महाराजः इति जानाम्यहम्) फलन्तीति नास्ति मे विश्वासः, विशिष्य विदेशेषु । (मम आत्मीयमित्ररूपिशत्रूणां शापवाक्यानि केवलं मयि फलितानि इति मदीयो अनुभवः बोधयतीति तु अपरो विषयः ।) अन्यश्च मुख्यो हेतुः यदहं क्षीरपायी शाकाहारी तृणपर्णकन्दमूलफलरसिकः जलरुचिको जन्तुविशेषः अस्मि । मामाहूय, मया सह उपविश्य, मह्यं निवेदितं मदपेक्षितं वा नीरसं खाद्यं रसयितुं रसनाः न रमन्ते यौष्माकीनाः । (अगतिकगतिकन्यायेन) घासमपि हसन्नेव भक्षयेयमहम् । परं यूयं किमर्थमिदम् अनुभवथ अकारणमेव मामाहूय? अतः वचसैव तृप्तोऽहमस्मि । मा साहसं

कुरुत...'' इत्यादिरूपेण। बहुधा बोधयन्नपि अहं तदा तदा भोजनोत्सवे भागग्रहणकर्मण: बलिपशु: भवति स्म सकृत् क्वचित्। आत्मीयानाम् आश्रयदातृणाम् अनुरोधम् अन्यथाकर्तुम् असति सम्भवे अन्यत् किं वा कोऽपि वराक: कुर्यात्।

तेषामेव आतिथेयानां तैलशकटेन तद्गृहं गच्छन्नहं प्रथममेव मे शुनकद्वेषं निवेद्य ग्रामसिंहभीते: आत्मरक्षणं कुर्वन्नासम्। लोकाभिरामतया ता: ता: कथा: कथयन् काफीं (केवलां काफीं, क्षीररहितामपि शर्करासहिताम्) चूषन्, भारतीय-संस्कृते: माहात्म्यं वर्णयन्, अचिरादेव खाद्यविषये वार्तालापम् आरभमाणे मयिते सर्वाङ्गाणि श्रोत्रीकृत्य शृण्वते स्म।

''दोक्तोर् राव्'' (नेयमिंग्लिष् परं स्पानिष्) ''भवान् शाकाहारीति चेत् कुक्कुटाण्डखादने दोषो नास्ति किल। यत: अद्यत्वे अण्डानि शावकत्वेन न परिणमन्ते (अवशिष्यन्ते चेदेव ईदृश: अवसर: वदति स्म मे स्वान्तम्)। वैद्या अपि वदन्ति यत् 'अण्डमेकं प्रतिदिनं वैद्यं निष्कासयेत् ध्रुवम्'' इति। आर्यसमाजीय: जैनो वा नास्मीति जानन्नपि अहम् अण्डे भ्रूणहत्यां पश्यन् कथमपि अण्डं पिण्डं ब्रह्माण्डमपि परिहृत्य अत एव पिपासित: पुन: पानीयं पीत्वा पीठिकायां पृथक् उपविशति स्म। महानसं प्रविश्य, सूदं प्रबोध्य अण्डं पिण्डीकृत्य (प्रक्षिप्य वा) प्रत्यागतो आतिथेय: पुन: प्रकटयति स्म एवम् 'अस्तु अस्तु अद्य अहमपि अण्डं न जिघ्रामि। परं भवते समुद्रशाक: (अर्थात् कूर्मरूपिणो विष्णो: पूर्वावतार:) रोचते इति मन्यामहे। रामकृष्ण:, विवेकानन्द:, अस्माकं गुरु:, (अहं तु लघु:) भारतादागत: स:, अयं, एष:.... सर्वे मत्स्यभक्षणे दोषं न पश्यन्ति। अत: भवानपि स्वीकरोति किल। मम सूद: सजीवमत्स्यपाचनकर्मणि नितरां निष्णात:'' इति।

स्तोकमिव विश्रान्तिं प्राप्य, पूर्वाधीतां तत्त्वशास्त्रं स्मरन्

गोमाहात्म्यं वर्णयित्वा, केवलं क्षीरं तक्रं दधि नवनीतं घृतमिति गव्य – पञ्चकमेव खादामीति निवेदयति मयि, 'गव्यं सर्वं स्वीक्रियते चेत् गौरेव कुतो न भक्ष्यते' इति आतिथेयानां परिप्रश्नः । अनेन प्रश्नाघातेन प्रहृतहृदयोऽपि अन्यथैव सचेतनः विचेष्टमानः अहमेवं वदन्नासम् । ''भारतदेशे भोजनपद्धतिः प्रतिगृहं भिद्यते । क्वचित् ब्राह्मणाः मत्स्यादिनः, क्वचित् ब्राह्मणेतरा अपि शाकमात्रभक्षिणः । केचित् मत्स्यमेव खादन्ति, केचित् कुक्कुटाण्डं केवलम् । कुक्कुटभक्षिणः केचित्, अजापुत्रखादकाः अपरे । गोमांसभक्षिणोऽपि वराहं केचन न खादन्ति । वराहमपि खादन्तः केचित् गोमांसं परिहरन्ति । सर्पं खादन्ति कपिं कवलयन्ति । उभयोः पूजामपि कुर्वन्ति इतरे। परन्तु अहं यस्मिन् परिवारे लब्धजन्मा तत्र यत् भुज्यते तदेव अहमपि भोक्ष्ये । कन्दर्पलशुनाभ्यां कोऽपराधः कृतः तन्न जाने । मम अभ्यासः नास्ति । रुचिरपि नास्ति । आवश्यकता न विद्यते । परिहर्तुमपि शक्यते चेत् परिह्रियते मया । विश्वामित्रः कदाचित् शुनकमेव भक्षितवानिति कथयन्ति । मम तादृशी दुरवस्था नाद्यापि आपतिता ''इति ।

भाषणं समाप्य तूष्णीके स्थिते मयि मान्यमित्राणि भणन्ति स्म । ''केवलं सस्यभक्षणेन शक्तिः कथमायाति? केवलशाकाहारिभिः चिरं जीवितुमेव न शक्यते'' इति । गजराजस्य दृष्टान्तं दर्शयन् उच्यते स्म मया - ''यूयं तथ्यं न जानीथ । अस्माकं देश एव त्रयस्त्रिंशत्कोटिमिताः जनाः शाकाहारिणः केवलशाकाहारिणः नीरोगाः निवसन्ति । ...'' इत्यादि ।

परिणामतश्च कश्चित् कालानन्तरं अतिथये मे भोजनं साडम्बरं सोपचारं सवैभवं परिवेष्यते स्म यत्र च भाजने पुष्पदलानि कतिचित्, कन्दमूलफलानां शकलानि कानिचित्, विविधशाकानां पत्रखण्डानि कानिचित् राशीकृतानि (प्रभूतं जलं च पार्श्वे) । प्रार्थ्यमाने च मयि

पृथग्रूपेण श्वेत: कृष्ण: रक्त: हरितो वा मरिच: लवणमपि पुरस्क्रियते स्म । चमसं छुरिकां चतु:शूलकं च उपकरणानि अशनयज्ञस्य । सस्यपाचनं ते बहुधा न जानन्ति । अत: लब्धमेव वस्तु मे परमान्नं पञ्चामृतं च ।

असकृत् कैश्चित् महामहिमशालिभि: ओदनमपि पाचितं मत्कृते । तदा दध्योदनं भुक्त्वा तृप्त: ससुखं स्वगृहं प्रत्यागतोऽस्मि । क्वचित्, क्वचिदेव किमु बहुत्रैव, स्वगृहगता: सामग्री: नीत्वा तेभ्योऽपि मदीयं पाककौशलं प्रदर्श्य प्राणान् धारितवान् अस्मि । दूरप्रयाणे विधेये सति पाथेयं प्रथममेव सज्जीकृत्य प्रवासप्रयास: प्रारभ्यते स्म ।

किञ्चित्कालानन्तरं, यदि कश्चित् भोजनार्थं माम् आह्वयति तदा अहं चपलो वटुरिव वदन्नासम् - 'किं मया पाचितं पौरस्त्यं भोजनं अत्तुम् आशा सञ्जाता?' इति । अथवा सति परिचयाधिक्ये च - 'मम गृहमेव समायात । स्वगृहे एव अतिथिर्भूत्वा आतिथेयान् युष्मान् तर्पयामि स्वीयेन पाकप्रावीण्येन' इति । तथापि मे मित्राणि मां न परित्यजन्ति स्म । ममापि स्वाभ्यासं परित्यक्तुं मन: न, आवश्यकतापि नैव । अज्ञाते पाककर्मणि तु अपरैव कथा ।

वस्तुतस्तु विदेशेष्वपि शाकाहारिभि: समीचीनतया स्वजीवनं निर्वोढुं शक्यते, स्वदेशे प्रतिषिद्धं खाद्यं पेयम् अनुपयुज्यापि । परं बहव: आचारवन्तो(?) भारतीया: अवसरस्य दुरुपयोगं (सदुपयोगमिति वरं स्यात्) गृहीत्वा मांसाहारिण: मद्यपायिनश्च भवन्ति । समानताया:, स्पर्धाया:, चपलताया:, अनुकरणस्य वा कारणात् स्वव्रतभङ्गं विधास्यन्ति । एतदर्थं तत्रैव गन्तव्यमिति नास्ति इत्यहं मन्ये । अद्यत्वे सर्वत्र शाकाहारस्य गुणा: जोघुष्यन्ते चेत् कुतो वा वयं तत् परित्यजाम: इत्येव मे प्रश्न: । अयं प्रश्न: अद्यापि वरीवर्ति । अथवा किंवा भवान् मन्यते ?

# सा...

सुभ्रूः, सुकेशी, सुदती, सुवर्णा, **'सा'** सुलोचना, संक्षेपतश्चेत् स्मर्तव्या सर्वावयवसुन्दरी । स्वीये तारुण्ये वर्तमाना, विंशतिके वयसि विराजमाना सा सर्वजनमनोहरा सदा रमणीया च । सुमधुरलावण्येन सुभगवेषेण सदाचारैः सुस्मितैः सुसंस्कृतवृत्तेन च अनितरसाधारणम् अपूर्वम् आकर्षणमासीत् अस्याः आननारविन्दे । सिद्धवस्त्रविक्रयशालायां कर्मनिरता सा । सोपानपंक्तिषु प्रकोष्ठाभ्यन्तरे वा गच्छन्त्यां तस्यां निष्कारणमेव तां द्रष्टुमहं वीथिकातः स्वमुखम् उन्नमय्य, सकृत् असकृद्वा तन्मुखकमलं दृष्ट्वा, तत एव स्वीयं कार्यालयं प्रति गच्छन्नासं निरपवादतया ।

सः वस्त्रापणः, यत्रैषा कार्यनिरता, कथमपि कुतूहलजनक एव । बहिः स्थितः कोऽपि मनुजपशुः आपणाभ्यन्तरं द्रष्टुं न पारयति स्म । तथापि यदा कदा वा क्वचित् काचित् कमनीयरूपा ललनामणिः यवनिकाभ्यन्तर एव दृष्टिपथमायाति स्म स्वकर्तव्यनिर्वहणनिमग्ना वस्त्रविशेषाणां विशिष्टालङ्कारकर्मणि व्यापृता, आलिखिता अप्सराः इव । आपणस्य प्रवेशद्वारेऽपि काचित् महती काचपेटी यत्रैका निर्जीवा पुत्थलिका सजीवेव प्रतिदिनं नवनवीनं परिधानविशेषं धारयन्ती, रसिकमनांसि विनोदयन्ती, ग्राहकान् आकर्षन्ती, विद्युत्पञ्जरबद्धापि स्वतन्त्रेव विराजमाना, विशिष्य मादृशान् मोहयन्ती अतिष्ठत् । सुविहितवस्त्रविन्यासा चेयं पुत्थलिका तस्याः तरुण्याः सादृश्यं वहन्तीव, संदृश्यते स्म - देशविदेशानां विमानपत्तनानां विनाकृतकरविशेषाणां वस्त्रापणानां मध्ये उपलभ्यमानाः जापानशाटिकाः धृत्वा ।

पृथग्रूपेण श्वेतः कृष्णः रक्तः हरितो वा मरिचः लवणमपि पुरस्क्रियते स्म । चमसं छुरिकां चतुःशूलकं च उपकरणानि अशनयज्ञस्य । सस्यपाचनं ते बहुधा न जानन्ति । अतः लब्धमेव वस्तु मे परमान्नं पञ्चामृतं च ।

असकृत् कैश्चित् महामहिमशालिभिः ओदनमपि पाचितं मत्कृते । तदा दध्योदनं भुक्त्वा तृप्तः ससुखं स्वगृहं प्रत्यागतोऽस्मि । क्वचित्, क्वचिदेव किमु बहुत्रैव, स्वगृहगताः सामग्रीः नीत्वा तेभ्योऽपि मदीयं पाककौशलं प्रदर्श्य प्राणान् धारितवान् अस्मि । दूरप्रयाणे विधेये सति पाथेयं प्रथममेव सज्जीकृत्य प्रवासप्रयासः प्रारभ्यते स्म ।

किञ्चित्कालानन्तरं, यदि कश्चित् भोजनार्थं माम् आह्वयति तदा अहं चपलो वटुरिव वदन्नासम् - 'किं मया पाचितं पौरस्त्यं भोजनं अत्तुम् आशा सञ्जाता?' इति । अथवा सति परिचयाधिक्ये च - 'मम गृहमेव समायात । स्वगृहे एव अतिथिर्भूत्वा आतिथेयान् युष्मान् तर्पयामि स्वीयेन पाकप्रावीण्येन' इति । तथापि मे मित्राणि मां न परित्यजन्ति स्म । ममापि स्वाभ्यासं परित्यक्तुं मनः न, आवश्यकतापि नैव । अज्ञाते पाककर्मणि तु अपरैव कथा ।

वस्तुतस्तु विदेशेष्वपि शाकाहारिभिः समीचीनतया स्वजीवनं निर्वोढुं शक्यते, स्वदेशे प्रतिषिद्धं खाद्यं पेयम् अनुपयुज्यापि । परं बहवः आचारवन्तो(?) भारतीयाः अवसरस्य दुरुपयोगं (सदुपयोगमिति वरं स्यात्) गृहीत्वा मांसाहारिणः मद्यपायिनश्च भवन्ति । समानतायाः, स्पर्धायाः, चपलतायाः, अनुकरणस्य वा कारणात् स्वव्रतभङ्गं विधास्यन्ति । एतदर्थं तत्रैव गन्तव्यमिति नास्ति इत्यहं मन्ये । अद्यत्वे सर्वत्र शाकाहारस्य गुणाः जोघुष्यन्ते चेत् कुतो वा वयं तत् परित्यजामः इत्येव मे प्रश्नः । अयं प्रश्नः अद्यापि वरीवर्ति । अथवा किंवा भवान् मन्यते?

# सा...

सुभ्रूः, सुकेशी, सुदती, सुवर्णा, 'सा' सुलोचना, संक्षेपतश्चेत् स्मर्तव्या सर्वावयवसुन्दरी । स्वीये तारुण्ये वर्तमाना, विंशतिके वयसि विराजमाना सा सर्वजनमनोहरा सदा रमणीया च । सुमधुरलावण्येन सुभगवेषेण सदाचारैः सुस्मितैः सुसंस्कृतवृत्तेन च अनितरसाधारणम् अपूर्वम् आकर्षणमासीत् अस्याः आननारविन्दे । सिद्धवस्त्रविक्रयशालायां कर्मनिरता सा । सोपानपंक्तिषु प्रकोष्ठाभ्यन्तरे वा गच्छन्त्यां तस्यां निष्कारणमेव तां द्रष्टुमहं वीथिकातः स्वमुखम् उन्नमय्य, सकृत् असकृद्वा तन्मुखकमलं दृष्ट्वा, तत एव स्वीयं कार्यालयं प्रति गच्छन्नासं निरपवादतया ।

सः वस्त्रापणः, यत्रैषा कार्यनिरता, कथमपि कुतूहलजनक एव । बहिः स्थितः कोऽपि मनुजपशुः आपणाभ्यन्तरं द्रष्टुं न पारयति स्म । तथापि यदा कदा वा क्वचित् काचित् कमनीयरूपा ललनामणिः यवनिकाभ्यन्तर एव दृष्टिपथमायाति स्म स्वकर्तव्यनिर्वहणनिमग्ना वस्त्रविशेषाणां विशिष्टालङ्कारकर्मणि व्यापृता, आलिखिता अप्सराः इव । आपणस्य प्रवेशद्वारेऽपि काचित् महती काचपेटी यत्रैका निर्जीवा पुत्थलिका सजीवेव प्रतिदिनं नवनवीनं परिधानविशेषं धारयन्ती, रसिकमनांसि विनोदयन्ती, ग्राहकान् आकर्षन्ती, विद्युत्पञ्जरबद्धापि स्वतन्त्रेव विराजमाना, विशिष्य मादृशान् मोहयन्ती अतिष्ठत् । सुविहितवस्त्रविन्यासा चेयं पुत्थलिका तस्याः तरुण्याः सादृश्यं वहन्तीव, संदृश्यते स्म - देशविदेशानां विमानपत्तनानां विनाकृतकरविशेषाणां वस्त्रापणानां मध्ये उपलभ्यमानाः जापानशाटिकाः धृत्वा ।

यथाकथमपि प्रत्यहं तस्य वस्त्रापणस्य मार्गमाश्रित्यैव निजकार्यालयं प्रति गमनं मम निश्चितं नित्यकर्माभूत्। सकृदपि तस्याः दर्शनं न भवति चेत् नितरां खिद्यते स्म मे चेतः। पूर्णं दिनमपि शून्यमिव प्रतिभाति स्म। स्वीये कार्यालये कार्यमग्नेऽपि मयि ममः मनस्तु तस्यामेव रमते स्म। विरामक्षणेषु तु मे मनःप्राङ्गणे सा नृत्यन्ती मत्पुरतः प्रादुर्भवति स्म। तदा तदा एवमपि चिन्तासन्ततयः समुद्भवन्ति स्म यथा का स्विदेषा सुन्दरी तरुणी? ऊढा स्यादथवानूढा? अपत्यं किं भवेदस्याः? कः पतिः स्यात् तस्याः भाग्यभाक्? ... इत्यादिप्रश्नेभ्यः उत्तराणि लब्धानि स्युरपि मम भावनायां भेदः न भवति स्म। यतः सर्वोऽपि अनूढः पुमान् समीपस्थां सुन्दरीम् अनूढाम् अनपत्यकां स्वप्रणयिनीं प्रियतमामेव मन्यते ननु।

प्रतिदिवसमपि तस्याः दर्शनं मह्यं कामपि अव्यक्तरमणीयां तृप्तिमापादयति स्म यथाहं नितरां तुष्टः परेद्युपर्यन्तम्। कस्मिंश्चिदपि दिने तामहम् अपश्यं केनापि तरुणेन सह सम्भाषमाणाम्। सपद्येव अहं स्वके क्रोधमूर्च्छितः अभवम्। नाशकं तत् दृश्यं सुचिरं सोढुम्। स तस्याः पतिः भवेत् अथवा भ्राता। परं सुपुष्टः सुन्दरो युवा। अहं तु समत्सरं तां निर्निमेषदृशा दहन्निव दृष्टवान्। न कदापि पूर्वं मयैवम् आचरितमासीत्। दिष्ट्या नाहं परशिवः आसं, न वा सा रतिः, नापि स पुरुषः मन्मथः क्रोधाग्नौ भस्म भवितुम्। यदाहं तां गूढं समीपे सुष्ठु संलक्षितवान् रिक्तः आसीत् तस्याः भालदेशः। न कुङ्कुमं ललाटे नापि सिन्धूरं सीमन्ते। सा अन्यमतधर्मीया किमु स्यात्?... न न दैवहतक कुतो वा स्वत्वबुद्धिः तस्यां मम?

जनाः तु कथयन्ति यत् चमत्काराः खलु बहवो भवन्ति अस्मिन् जगतीतले इति। परं नाहं सर्वं विश्वसिमि। कथमपि नास्ति कदाचित् मया प्रार्थितो देवः चमत्कारार्थं यदपि ममभवत् एकस्मिन् दिने। सा

ननु सा, तस्याः वस्त्रविक्रयशालायाः तरुणी, मे स्वप्नसुन्दरी, सकृत् मां द्रष्टुं मदीयं कार्यालयम् आगच्छत् । यदैव द्वारि स्थितः प्रतीहारः मम प्रकोष्ठस्याभ्यन्तरं तां प्रावेशयत् न कोऽपि शब्दः स्मृतिपथमायातः तस्यै स्वागतवचनानि व्याहर्तुम् । किंकर्तव्यमूढतया अभिभूतोऽहमभवम् । पुरः एव तिष्ठन्त्यां तस्यां तदभिमुखे उपविश्य तां द्रष्टुमपि नाहमपारयम् । न जाने यदि तया ज्ञातमिदं यदहं तां निजहृदयप्रकोष्ठाभ्यन्तरे बद्ध्वा संरक्षितवानिति । को वा वेद हि दूरवेदनाम्?

सोऽहं व्यवस्थापितवाक् कथञ्चित् स्वागतं व्याहृत्य सविनयमेव अपृच्छम्-'कः समाचारः?' तां तुदितुं न खलु ईप्सितं मया । सत्यं वक्तव्यं चेत् अहं तस्याः अभिरामः भवितुमेव इष्टवान् ।

''अहमस्मि शान्तिः, सुन्दरस्य पत्नी'' उदतरत् सा ।

'सुन्दर' इति नामधेयं परिचितपूर्वं प्रत्यभासत मे । सुन्दरः अस्मद् ग्रामस्यैव अभिजनः । कतिभ्यश्चित् वर्षेभ्यः पूर्वं यदैव स मुम्बईं समागतः अहमेव प्रथमो जन आसं यः तेन मिलितः । तस्य पिता गोविन्दः क्षेत्रकृषकेषु अन्यतम आसीत् निजग्रामे मे । अस्माभिर्ज्ञायते स्म यद् गोविन्दः बह्वपत्यः धनिकश्च क्षेत्रस्वामीति । परं सामाजिकदृष्ट्या नासीदस्मासु कोऽपि सम्बन्धविशेषः । वयं क्षेत्रस्वामिनः सोऽपि कश्चित् कृषिकर्मकः ।

सुन्दरो मां यदा अमिलत् उद्योगः कोऽपि प्रार्थित आसीत् तेन । 'यः कोऽपि उद्योगः भवतु' - इत्यूचिवान् आसीत् सः ।

''किमर्थं स्वग्रामं त्यक्तवान्?'' अहमासं पृष्टवान् ।

''वयं भ्रातरः षट् ,भगिन्यौ द्वे च । उपरते च पितरि अल्पेन

आदायेन निजनिलये जीवितुं महान् क्लेशः अनुभूतः स्वके ग्रामे। दिष्ट्या उभयोरपि कन्ययोः विवाहः पित्रैव निर्वर्तित आसीत् निजजीवितावधौ। भ्रातृषु द्वौ ग्रामे एव उषितुं कृतमनस्कौ अभूताम्। अवशिष्टाः चतुरः एकैकशः ग्रामं त्यक्तवन्तो वयम्। अहमेव चरमः निजसदनात् निर्गन्तुम्।''

''त्वं शालायां पठन्नासीः ननु?''

''आम, अहं दशमकक्ष्यापर्यन्तं पठितवानस्मि।''

''न खलु उद्योगाः अस्मत्प्रतीक्षायां तिष्ठन्ति। तथापि त्वदर्थं कमपि समुचितम् उद्योगम् अन्वेष्टुं प्रयतिष्ये। त्वत्पिता गोविन्दः अस्माकं बहुसेवां कुरुते स्म। दिनद्वयानन्तरं मां पश्य''-इति आज्ञापितवानहम्।

कथमपि दैवगत्या उक्तमात्रे एव मयि कोऽपि उद्योगपतिः स्वीये समवाये सुन्दरं सेवकत्वेन स्वीकर्तुम् स्वीकृतवान्। ततः परेद्यवि सुन्दरः तत्रासीत् प्रेषितः।

मन्ये स उद्योगः तेन स्वीकृत आसीत् सुन्दरेण। ततः न कदापि आसीदवसरः सुन्दरं मिलितुम्। वस्तुतस्तु मम तावती आसक्तिरपि नासीत् तं पुनः द्रष्टुं सः अन्यां कामपि प्रार्थनां पुरस्कुर्यादिति मनीषयैव।

सुन्दरस्य पत्नी शान्तिः मम संमुखे अतिष्ठत्। मुहुर्तमात्रे अहं सर्वमपि सुन्दरसमाचारं स्मृतवान्। नातः परं 'सा' सा वस्त्रापणे विद्यमाना अपरिचिता अप्सराः या मम मनोमन्दिरे साधु संस्थापिता। सा तु अस्माकमेव ग्रामस्य सुन्दरस्य पत्नी सा सा एव।

''मत्तः त्वं किम् अपेक्षसे?''- तामहम् अपृच्छम्

अशान्तमनसापि तु, न कोपेन ।

"मम पतिः भवद्विषये उक्तवान् आसीत् । भवद्विषये तु बहु भक्तिभावयुतः खलु सः यतः उद्योगः दापितो भवता । तेन च नूतनं जीवनं प्रदत्तमासीत् अस्मिन् महानगरे मम पत्युः । स च मया सह भवन्तं द्रष्टुं सकृद्वा मिलितुम् इयेष उभयोरपि आवयोः कृतज्ञतां निवेदयितुम् । परं परं स दिवसः नैव समायातः ...।"

"किं किं किमभूत् सुन्दराय?"

"गत........ गतवर्षे दिवमगात् ।"

"दिवमगात्? अस्ति किञ्चित् अपत्यं ते?"

"नास्ति किमपि । दिष्ट्या एवेति मन्ये ।"

अहमासं शोकाविष्टः । एका 'विधवा' ईदृश्येव तरुणे वयसि!

समकालमेव मे मनसि आसीद् अन्यापि काचित् भावना समुद्भूता - "मम अनूढपत्नी (अवैधपत्नी) भूत्वा मया सह स्थातुमियम् अङ्गीकुर्याद्वा? न तत्र कोऽपि दोषः विरुद्धाचारो वा स्याद् यदि धनिकः कश्चित् उन्नतोद्योगः उपपत्नीमेकां स्वगृहे रक्षति" इति । परं तद्दिशायां पुनरग्रे चिन्तयितुं नाहं तदा प्रयतितवान् यतः सा खलु कामुकता भवेत् ।

"श्वः", मौनं विभज्य शान्तिरवोचत् - "मम पत्युः प्रथमं वार्षिकश्राद्धं वर्तते । अहमत्र समायाता भवतः आशिषः ग्रहीतुम् । भवांश्च तस्य ग्रामस्यैव अभिजनः क्षेत्रस्वामी चेति ।"

आशिषः? दुर्हृदयेन क्षेत्रस्वामिना? उन्नतोद्योगवान्न क्षेत्रस्वामी चेति योऽयमध्यासः मया सर्वत्र कारितः आसीत् सः झटिति भग्नः अभूत्

। अहम् अचिन्तयम् - ''सेयं शान्तिः अस्माकं संस्कृतेः प्रतिनिधिरस्ति कथङ्कारमपि नाहम् । सा खलु संस्कृता जीवति ।''

रूप्यकाणां शतस्य मुद्रामेकाम् उद्धृत्य शान्त्यै प्रायच्छम् - ''कृपया स्वीकुरु श्राद्धकर्मणे । सुन्दरः सुशीलः युवा आसीत् ।''

''अहं भवतः आशीरर्थमागता न खलु धनार्थम्'' उक्तवती सा ।

शान्तिः धन नव स्वीचकार । सा मां प्रणम्य कार्यालयप्रकोष्ठात् बहिः निरगच्छत् । अहं तस्याः विषये अधिकं ज्ञातुम् अभिलषितवान् । परं सा अवसरं नायच्छत् ।

वस्तुतस्तु अहमस्मि तस्यै नितरां कृतज्ञः । सा खलु मे हृदयात् किल्विषमेकं निर्मूलितवती ।।

# विदेशे केशकर्तनम्

केशकर्तनम्, आयुष्कर्म अथवा मुण्डनमिति कोऽयं महान् विषयः यमधिकृत्य कोऽपि लेखः लिख्यते? तत्रापि विशिष्य संस्कृतपत्रिकायामिति मा चिन्तयत । यदि भवद्भिः कदाचित् विदेशवासः कृतः भवति तदैव अस्य माहात्म्यं, महिमा, गरिमा वा अनुभूयते । अत्रत्यैः विपश्चिदपश्चिमैः सम्प्रदायैकशरणैरपि विदेशानुभवः अवश्यं प्राप्तव्य इति मे मतिः । भवादृशेषु अन्यतमः अयं जनोऽपि वर्षत्रयात् प्राक् कदाचित् प्रथमवारं विदेशवासमन्वभवत् । तत्र लब्धेषु बहुषु चित्रविचित्रानुभवेषु 'सहस्र- रूप्यकाणां शिरोदण्डस्य' अनुभवं कथं वा विस्मरेयमहम् ।

बहवः प्राचीनपण्डिता इव अहमपि कस्मिंश्चित् ग्रामे लब्धजन्मास्मि । बाल्ये वयसि अस्माकं केशकर्तनं निश्चितेन पुरुषविशेषेण निश्चिते दिने नियतं भवति स्म । समेषां केशकर्तनानां कृते वर्षे सकृदेव धनं वा, धान्यं वा वस्तुविशेषं वा स्वीकृत्य क्षौरिकः सन्तृप्तः स्वगृहं गच्छति स्म इति दृढं खलु अहं स्मरामि । षोडशग्रामाणां ग्रामणीत्वं मे पितामहस्य आसीत् तदानीन्तनकाले । वयं तु आस्म बासूरु ग्रामे, चिक्कमगलूरुमण्डले ।

कर्णाटकराज्यस्य प्राशासनिकप्राथमिकशालायां अध्यापको मे पिता इत्यतः ग्रामाद् ग्रामं प्रति कार्यपरिवर्तनं भवति स्म तदा तदा । अतो वयं स्वग्रामं त्यक्त्वा कदाचित् कडूरु नामकं बृहद्ग्रामं, ताल्लूकुकेन्द्रं, गताः । तत्र क्षौरिक-पुत्रेभ्योऽपि गृहपाठः दीयते स्म पितृपादेनेति निःशुल्कमेव अस्माकं शिरसां, न न शिरोरुहाणां केवलं, कर्तनं क्रियते स्म आयुष्कर्मविशारदेन गोविन्ददासेन । तस्मादपि

स्थानात् महत्पुरं तरीकेरे संज्ञकं गन्तव्यमभूदस्माभिः। पञ्चत्रिंशद्वर्षेभ्यः पूर्वम्, इदम्प्रथमतया इति मन्ये, अस्माभिः आयुष्कर्मार्थमपि धनं-(चतुराणकाः अथवा पञ्चविंशतिः नवपैसकाः) - प्रदेयमभूत् । तदानीन्तनकाले प्राथमिकशालाध्यापकेन प्रतिमासं रूप्यकं यावत् केशार्थं विनियोक्तुं महान् क्लेशः अनुभूयते स्म । अतः वयं वर्षे पञ्चषवाराणि केवलं वपनविषयं विचिन्तयन्तः आस्म । इत उत्तरं केशानां कर्तनं कर्तर्या न भवतीति वदति क्षौरिके लघु-लघुतर-लघुतमकेशैः'समं गृहं गत्वा अभ्यञ्जनं सचेल-स्नानं विधीयते स्म ।

ततश्च विद्यालय-महाविद्यालय-विश्वविद्यालयेषु विधीयमाने विद्यार्जने रूप्यकद्वयपर्यन्तं मया एतदर्थं व्ययीकृतमभूत् । बेङ्गलूरुनगरे पञ्चविंशति-वर्षपर्यन्तम् उषित्वा मेक्सिकोनगरं प्रतिष्ठमानेन मया गमनात् प्राक् दशरूप्यकाणि दत्वा केशकर्तन-महोत्सवः स्वदेशे अन्तिमवारं विहितः आसीत् ।

परं यदा मेक्सिकोदेशस्य राजधान्यां, विश्वस्य बृहत्तमनगर्यां, स्थितमभूत् मासद्वये न किमपि परिवर्तनं परिलक्षितमभूत् मयि ऋते शिरोरुहाणां वर्धनात् । शिरसः अन्तः प्राक्तना बुद्धिः प्राचीनाः संस्कारा एव स्थिता आसन् । तथापि कियत्कालं केशकर्तनं विना स्थातुं शक्यते विशिष्य च नित्यसंस्कृतकेशानां ताम्रमुखानां विदेशीयानां पुरतः? अन्यदपि कारणम् आसीदेव यदनभ्यासकारणात् हिप्पीसदृशं लम्बकेशं रक्षितुं शिरोरोगः बाधते स्म माम् । मनोऽपि न अनुमनुते स्म मे ।

अतोऽहं सेवकचरमाहूय मम समस्यायाः परिहारार्थं साहाय्यं प्रार्थितवान् । मम कृते मनसि रूढमूलान् विधिनिषेधानपि निवेदितवान् । उदाहरणार्थं यथा जन्मदिवसे मास्तु, शनिमङ्गलयोः मास्तु, मध्याह्नात् परं मास्तु, अशनोत्तरं मास्तु.....इत्यादीत्यादिरूपेण । एवं मीनमेषादिकं गुणित्वा ततोऽपि मासादूर्ध्वं मुहूर्तः अन्विष्टो मया । मम गृहजनाः तत्र

समुखे नासन्निति मासत्रयं यावदपि लम्बशिरोरुहः कथमपि कालं यापितवान्।

मेक्सिकोनगरे यस्मिन् विस्तरणे अहम् उषितवान् तत्र सर्वेऽपि धनिकाः । समीपे कुत्रापि केशकर्तनालयः नासीत् । अतः सुदूरं तैलशकटेन गन्तव्यमासीदिति गतमेव मया । सेवकमपि साकं नीतवानहम् आत्मरक्षणार्थं न न, प्रत्यागमनसमये स्वगृहस्यैव अभिज्ञानार्थम् । परम् एकादशहोरासमयेऽपि आपणाः नोद्घाटिताः । कालयापनार्थं काफीपानीयं चूषितमुभाभ्यामपि । तावति मया षष्टिपेसो (तदा तस्य मूल्यं भारतीय मुद्रासु परिवर्तिते सति षट्शत रूप्यकाणि) द्रव्यं व्ययितमासीत् ।

द्वादशहोरायाः अवधेः प्रागेव कश्चन केशकर्तनालयः उद्घाट्यमानः संलक्षितो मया । झटिति धावित्वा प्रथमस्थानं जितवान् (द्वितीयस्थानं रिक्तमासीदिति तु अन्यो विषयः) परं मम विस्मयाय तत्र केशकर्तनकलाविशारदाः ललनामणयः एवासन् । चिरं प्रतीक्ष्यापि पुरुषव्यक्तिः परिसरप्रान्ते न क्वचित् दृष्टा ।

स्त्रीणां बालिकानामपि स्व-केशकर्तनविषये निजदेशे नितरां विरोधकोऽहमत्र तु अगतिकगतिकन्यायेन इदं प्रथमतया वरवर्णिन्याः पुरः मस्तकं न्यस्तवान् अधोमुखः सन् अन्तरात्मन्यपि । तदा मे मानसे कियान् सङ्कोचः, कियत्यः चिन्तासन्ततयः कया कया दिशया कथं कथं प्रादुरभूविन्निति वर्णयितुं न शब्दास्सन्ति संस्कृतभाषायामपि ।

निखिलेऽपि आपणे अहमेकाकी पुरुषः । मम सेवकस्तु बहिष्प्रपञ्चे आसेचनकदृश्येषु दत्तचित्तः क्वचित् दूरे । उन्मीलिते च नयने सर्वतो विद्यन्ते समवस्त्रधारिण्यः, सकर्तर्यः, सकङ्कतयः, सस्मिताः, सहासाः, धृतकिञ्चिद्वस्त्रका अपि दृश्यमानसर्वाङ्गाः, मदपेक्षयापि लघून्

शिरोरुहान् वहन्त्यः, ग्राहकाणां (ग्रहीतृणां वा) प्रतीक्षायां स्थिताः। स्पानिष् भाषामजानानोऽहं नैकभाषविदपि मूक इव संज्ञाभिः स्वीयं शिरसः भारं लघूकर्तुमादेशम् अयच्छम्। भीतभीत इव चक्षुषी निमील्य आसन्द्यामुपविष्टोऽहं तासां तरुणीनां सौन्दर्यम् अनास्वादयन् केवलं हास्यसंल्लापान् अशृणवम्। मां दृष्ट्वैव ताः अहसन्निति जानन्नपि अहं स्थितप्रज्ञः इव गम्भीरमुद्रया शिरोरक्षणविषये ध्यानपर आसम्।

तरुणीषु अन्यतमा, (तस्याः मुखं मया न लक्षितमिति न पुनर्वक्तव्यमस्ति ननु) समीपम् आगत्य सर्वप्रथमं स्वपाणिपल्लवं प्रयुज्य शुद्धजलेन मस्तकं क्षालितवती। तस्याः अङ्गुलीनां पाणेश्च प्रथमस्पर्शात् कः विकारः जात इति तु न खलु वाच्यतया निर्देष्टव्यः अनुभवैकगम्यस्य वस्तुनः वाचामगोचरत्वात्। कथमपि आत्मानं स्थिरीकृत्य पीठादपतन् दृढमुपविष्टे मयि सा ततः उत्तरीयं, तस्या एव न मम - न मम, गृहीत्वा मन्दमन्दं ससुखस्पर्शं परामृश्य मस्तकात् जलबिन्दुनिपातनं निरुद्धवती।

कङ्कतिविशेषं व्यापारयन्ती च ततः केशान् चारुदर्शनं यथा स्यात् तथा संस्कृतवती। अङ्गुलीभिः केशपंक्तीः ग्राहं ग्राहं कर्तर्या खण्डशः कुर्वन्ती पञ्चषेषु निमेषेषु, (तदा मम कृते दिनान्यपि निमेषायन्ते स्म) सर्वमपि शिरोरुहजातं साधु शकलितवती। मम उत्तमाङ्गस्योपरि तस्याः पाणिपल्लवस्य परामर्शनं, तेन च जातं स्पर्शसुखम्, अनुभूयमानेऽपि वस्तुनि स्मृतिपथमानीयमाने मयि - सा दर्पणं दर्शयित्वा, पुनः कङ्कत्या संस्कृत्य, वासचूर्णं लेपयित्वा स्वहस्तौ प्रक्षाल्य स्वस्थाने समुपाविशत्। अहं तु मनस्येव किमपि किमपि भावयन् मुहूर्तं तामेव पुनः प्रतीक्षमाणः पीठे उपाविशम्।

अत्रान्तरे सेवकः कथमपि अभ्येत्य समाप्तं केशकर्तनमिति निवेद्य माम् आसनात्, स्वप्नलोकादपि, अधः अवातारयत्। यद्यपि

प्रथमानुभवेनानेन सुखितोऽपि खिन्नमानसोऽहं पञ्चाशत् पेसो द्रव्यं (पञ्चशतरूप्यकाणि) दत्वा पुनः तैलशकटमारुह्य शून्यमनसैव निजसदनं प्राविशम् । सत्यं वक्तव्यं चेत् स्नानानन्तरमपि मे रोमाञ्चः सुचिरं मां सुखयति स्म ।

अनन्तरं बहुवारमेवमेव सहस्राधिकारूप्यकाणि व्ययीकृत्य अन्यान्ययुवतिहस्तलाघवमनुभूतम् । तथापि प्रथमवारं योऽनुभवो जातः तस्य स्मरणं अधुनापि मां रोमाञ्चयति । इदानीं मुम्बईनगरे केशकर्तनं अभूत् मे असकृत् पुम्भिः । तथापि पिहितापिहित-वक्षोजानां वैदेशिकयोषितां स्मरणं तु न मां कदापि विजहाति । तदा तदा अहमेवमपि चिन्तयामि यत् - अन्यकार्यार्थं भवतु वा मा वा, केशकर्तनार्थं तु सकृद्वा मया पुनरपि विदेशं गन्तव्यमेवेति ॥

* * *

# श्रीगुरुकृपातरङ्गिणी

## -एकम् अभिनवं महाकाव्यम्

आधुनिकसंस्कृतसाहित्यक्षेत्राय कर्णाटानां योगदानम् अधिकमेवास्ते । जग्गू वेङ्कटाचार्यः, जग्गू वकुलभूषणः, जग्गू शिङ्गरार्यः, गलगलि रामाचार्यः, गलगलि पण्ढरीनाथाचार्यः, विघ्नेश्वर शर्मा, दैवरातः, काव्यकण्ठ गणपति शास्त्री, श्रीकृष्णब्रह्मतन्त्रपरकालयतिः, मण्डिकल् रामशास्त्री, मण्डिकल् वरदाचार्यः, मण्डिकल् श्रीरङ्गाचार्यः, श्री सच्चिदानन्देन्द्र सरस्वती, चेन्नरायपट्टण वेङ्कटरमणय्यः, चामराजनगर रामशास्त्री, मैसूरु सीताराम शास्त्री, लक्ष्मीपुरं श्रीनिवासाचार्यः, डॉ. के.एस्. नागराजन्, विद्वान् एन्. रङ्गनाथ शर्मा, विद्वान् एच्.वि. नारायणशास्त्री, विद्वान् के. तिरुवेङ्कटाचार्यः, विद्वान् बि. वेङ्कटरामभट्टः, विद्वान् अलेवूरु सीतारामाचार्यः, के.एस्. कृष्णताताचार्यः, पण्डित के.एन्. वरदराज अय्यङ्गार्यः, विद्वान् बालगणपतिभट्टः, विद्वान् एच्.वि. नागराजराव् विद्वान् जगन्नाथः, विद्वान् अरैयर् श्रीरामशर्मा, शतावधानी रा.गणेशः, विद्वान् के. टि. पाण्डुरङ्गिः, विद्वान् के. विठ्ठल उपाध्यायः...एवं प्रकारेण शतशोऽथ सहस्रशः कवयः लेखकाश्च कर्णाटाभिजनाः सन्ति । एषां मध्ये ज्वलन्नक्षत्रमेकं वर्तते विद्वान् के.एस्. भास्करभट्ट इति ।

श्रीगुरुकृपातरङ्गिणीति महाकाव्यस्यास्य रचयिता सोऽयं कविः कर्णाटकराज्यस्य शिवमोग्गामण्डलस्य भीमनकोणाभिजनः श्री कल्लुमने सुब्बाभट्ट-श्रीमती लक्ष्मीरित्येतयोः सुपुत्रः। सरसकविता-निपुणोऽयं संस्कृत-कन्नडोभयभाषापण्डितः उभयभाषाकविश्च । अयं च विद्याध्ययनसमय एव 'कविकिशोरः', 'साहित्यभूषणम्' इति प्रशस्तिभाग्भूत् । अत हेतोः महीशूर महाराज-महास्थाने बहुमानितोऽपि

। षट्सप्ततिवर्षवया: कविवरोऽयं एकोनपञ्चाशदुत्तर-एकोन विंशतिशततमे खिस्तसंवत्सरे (१९४९) एव स्वरचिताय देवीविलासनामककाव्याय राजसभाभूषण- लिङ्गराजे— अरस- स्मारक-कविता-सुवर्णपारितोषिकं प्राप । स्वस्य छात्रदशात: आरभ्य अद्ययावदपि संस्कृतकाव्य-रचने अविरता खलु अस्य लेखनी । दशाधिकानां संस्कृतकाव्यानां नैकानां कवितानां बहूनां सुप्रभात-स्तोत्राणां रचयितायं कर्णाटकस्य नानाशालासु कन्नडसंस्कृते पाठयित्वा विश्रान्त: स्वग्रामे सुरसरस्वती-सेवाव्रते बद्धदीक्ष: ग्रन्थप्रणयने समयं सदुपयुञ्जमान: आस्ते । भास्करभट्टमहोदयस्य सर्वरचनासु अभिनवं प्रौढमहाकाव्यं **'श्रीगुरुकृपातरङ्गिणी'** एव सर्वोत्कृष्टा राजते । इदं च काव्यं पञ्चवर्षेभ्य: प्राक्प्रणीतमपि गतवर्षस्य आगष्टमासे केवलं भारतीयविद्याभवनस्य संवित्संस्कृतग्रन्थमालायां प्राकाश्यं नीतम् । काव्यस्यास्य कवितागुणै: समाकृष्टमानसोऽहं स्वीयमानन्दं स्तोकमिव संविभक्तुं भवतां पुरस्तादुद्यतोऽस्मि ।

प्राचीना: आलङ्कारिका: पद्यसाहित्यं महाकाव्यं खण्डकाव्यं मुक्तकञ्चेति त्रिधा मन्यन्ते । तत्र महाकाव्य-लक्षणं तु ''सर्गबन्धो महाकाव्यम्...'' इत्यादिरूपेण साधु निरूपितमस्ति यस्य च ज्ञानं सर्वेषामपि विद्यत एव । तत्रैव लक्षणपरिगणनावसरे अन्ते इदमपि सूचितमस्ति यत् ''न्यूनमप्यत्र यै: कैश्चित् अङ्गै: काव्यं न दुष्यति । यदुपात्तेषु सम्पत्ति: आराधयति तद्विद: ।।'' इति (दण्डिन: काव्यादर्शे) । भोजराजोऽपि - ''नावर्णनं नगर्यादि: दोषाय विदुषां मतम् । यदि शैलर्तुरात्र्यादेर्वर्णनेनैव तुष्यति ।।'' इति अभिप्रैति ।

वस्तुतस्तु न खलु सर्वाणि संस्कृतमहाकाव्यानि सर्वलक्षणसम्पन्नानि सन्ति । अष्टादशवर्णनमिति वर्णनसूत्रं (आधुनिकचित्रपटेषु अत्याचार:, बीभत्सनृत्यम्, पापगीतम्, हिंसा,

मारणम्, खलनायक:, प्रौढापि मुग्धा नायिका... इत्यादिसूत्रवत्, कदाचित् यान्त्रिकमपि प्रतिभाति । वस्तुवैविध्यमाश्रित्य खलु वर्णनालहरी वितन्यते। लक्षणानि केवलं दिक्प्रदर्शानार्थं भवन्ति । कविप्रतिभा एवमेव नेया प्रवाहणीया वेति कथं केन वा नियन्तुं शक्यते । नियतिकृतनियमरहिता: निरङ्कुशा: कवय: कवितयैव सुनीता: स्थास्यन्ति । महात्मगान्धिन: जीवनमाश्रित्य निर्मिते चित्रपटे अत्याचार-अनाचार-मधुपान-सलिलक्रीडादीनां प्रदर्शनं कियद्वा उचितं स्यात् । एवमेव शङ्कराचार्यचरिते का स्यात् नेतु: अस्य नायिका ययायं विप्रलब्ध: भवेत्। कुमारसम्भवे सुरतवर्णनं विद्यमानमपि कालिदासीये महाकाव्ये तस्य नान्तर्भाव: कथम् । आस्तां तावत् इदं सर्वम् ।

प्रकृतमनुसर्तव्यं चेत् गुरुकृपातरङ्गिणीति इदं काव्यं महाकाव्यमेव अस्ति । प्राचीनपरम्परामादृत्यैव कविरिदं प्राणैषीत् । श्री शङ्करभगवत्पादै: स्थापितस्य मठायतनस्य गुरुपरम्परायाम् आचार्याणां कृपातिशयमहिमादीनां वर्णनस्यैव अत्र प्राधान्यात् 'श्रीगुरुकृपातरङ्गिणी' इति नाम कृतं कल्हणविरचित-राजतरङ्गिणीवत् ।

एकनायकं काव्यमपि भवति । बहुनायकमपीदं सम्भवति रघुवंशादिवत् । अस्मिन् हि काव्ये कर्णाट-राज्यान्तर्गतस्य श्रीरामचन्द्रापुरस्य अद्यतनीया: मठाधिपतय: यतिपतय: श्री राघवेन्द्रभारती-महास्वामिन एव नायका: । तेषां तपोविशेषसम्पादित: लोकोपकार: एव कथावस्तु । शान्त एव प्रधानो रस: । रघुवंशे श्रीरामचन्द्रस्येव अस्मिन् काव्ये श्रीमद्राघवेन्द्रभारती-यतीश्वराणामेव चरितं प्रधानतया विस्तरेण उपवर्णितं कविवरेण कथावस्तुन: प्रत्यक्षगोचरत्वात् प्राय: । रघुवंशे तावत् श्रीरामादनन्तरं रघुवंशीयानां राज्ञां गुणाधिक्ये ह्रास: संदृष्ट: चेत् अत्र उत्तरोत्तरं तपोज्ञान-वैराग्यलोकोपकृतीनां संवर्धनमेव दरीदृश्यते ।

अस्मिंश्च काव्ये तरङ्गाभिधाः षट्सर्गाः सन्ति येषु आहत्य षट्शतानि नानावृत्तग्रथितानि पद्यरत्नानि सन्ति। प्रथमे द्वितीये च तरङ्गे प्राचीनाचार्यपरम्परा संग्रहेण निरूपिता । ततश्च समग्रे काव्ये श्रीराघवेन्द्रभारतीस्वामिनां चरितं विस्तरेण वर्णितम् ।

ग्रन्थारम्भस्तु नमस्क्रियारूपेण मङ्गलन भवति कवेः कथानायकस्य च समुचितेष्टदेवतायाः स्तुतिप्रणामपुरःसरम् । तद्यथा -

**यन्नामकीर्तनरसाप्लुतचित्तवृत्तिः**
**निष्कल्मषः कुलपतिः प्रथमः कवीनाम् ।**
**रामायणं नवरसाम्बुनिधिं व्यतानीत्**
**तं रामचन्द्रमनिशं प्रणमामि-मूर्ध्ना ।।**

श्रीमद्राघवेन्द्रभारती-स्वामिनाम् अधिष्ठानं रामचन्द्रापुरम् । तस्य प्रधानदेवता श्रीरामचन्द्रः । अतः आदौ श्रीरामस्य प्रणतिः युक्तरूपा । अभिनवोऽप्ययं कविः आदिकविं तत्काव्यं तत्प्रभावं च कथं वा विस्मरेत्। अतः खलु रामायणस्य वाल्मीकेरपि स्मरणं कृतमस्ति अत्र । वाच्यमाने एवास्मिन् प्रथमे पद्ये काव्यस्यास्य मञ्जुलता सरलता सरसता च अवगम्यन्ते स्थालीपुलाकन्यायेन । अत्रत्यं वसन्ततिलकावृत्तमपि हृद्यम् ।

द्वितीये मङ्गलपद्ये शैवसम्प्रदायवान् कविः चन्द्रमौलीश्वराभिधं शिवलिङ्गं स्तौति यत् च श्रीमच्छङ्करभगवत्पादैः अनुगृहीतं मठीयमाराध्यमपि । तदित्यम्

**लोकान्धकारमिव दानवमन्धकाख्यं**
**निर्वास्य यस्त्रिभुवनं करुणाम्बुराशिः ।**
**आदीप्य दिव्यकलया घनचित्प्रकाशो**
**भक्तानसौ दिह सोऽवतु चन्द्रमौलिः ।।**

पद्यस्यास्य स्वारस्यमेवं व्याख्यातमस्मद्गुरुवर्यैः रङ्गनाथशर्मभिः स्वरचितप्रस्तावनायाम् । ''घनचित् प्रकाशः चन्द्रमौलिः लोकान्धकारमिव दानवमन्धकाख्यं निरवासयत् । प्रकाशः खलु अन्धकारनिवारणकर्मणि समर्थयते इति प्रकाशो विशेषणतया समुपात्तः । लोकान्धकारश्च अनाद्यविद्यारूपः । तस्य निरसनं कर्तुमशक्यं लोकसाधारणेन सूर्यादिप्रकाशेनेति कृत्वा घनचित् रूपोऽयं प्रकाश इत्युक्तम् । किमर्थोऽयं चन्द्रमौलेः प्रयासः? यतोऽयं करुणाम्बुराशिः । कारुण्यं हि संश्रितसंरक्षणाय प्रवर्तयति पुरुषम् । आदीप्य दिव्यकलया इत्यनेन अनाद्यज्ञानरूपत्वमन्धकारस्य इति गम्यते । आदीपनं च सूर्यप्रकाशेनेव न सन्तापयति पुरुषम् । किन्तु चन्द्रस्य किरणेनेव शीतलयतीति चन्द्रमौलिशब्दः प्रयुक्तः... इत्यादि ।

अस्मिन् काव्ये मुख्यतया शान्तरसं न्यवेशयत् कविः । तदङ्गतया च अद्भुतभयानकावपि । ओजःप्रसादमाधुर्यवतीं रसानुकूलां विपञ्चीस्वरसौभाग्यां कालिदासादिभिरादृतां वैदर्भीमाश्रयच्च ।

उदाहरणार्थं काव्यस्यास्य तृतीये तरङ्गे बाल-संन्यासिनां श्रीराघवेन्द्रभारतीस्वामिनां चेतोवृत्तिवर्णनाप्रसङ्गे शान्तरसस्थायी-निर्वेदनिरूपणं यथा -

**केवलं निरञ्जनं निराकुलं निरीहकं**
**जन्ममृत्युनाशकं भवार्णवस्य तारकम् ।**
**नित्यशुद्धबुद्धमुक्तमानुभाविकं परं**
**तत्पदं निजस्वरूपमाप्नुयामहं कथम् ।।**(पृ.३३)

तृतीयतरङ्गे वसन्तर्तुवर्णनाप्रसङ्गे प्रसादगुणगुम्फिता वैदर्भीरीतिः यथा -

**चूतशाखिकानिषण्णकोकिलस्वनाञ्चितः**
**चारुचन्द्रिकावदातकाननार्पिताञ्चलः ।**

केशवार्चनानुकूलसात्त्विकानुरञ्जकः
कोऽपि काल आजगाम माधवीमनोहरः ॥(पृ. ३६)

चतुर्थतरङ्गे स्वामिनां प्रौढविद्यार्जनाय काशीक्षेत्रगमनस्य उत्कण्ठां वर्णयिष्यन् कविरयमोजोगुणगर्भितां वैदर्भीमेव उपक्षिपति यथा -

हरिपदनखकान्तिस्वच्छपूरं वहन्ती
तुहिनकिरणमौलेर्मस्तकान्निष्पतन्ती ।
शिशिरशिखरिसानुप्राङ्गणान्तर्लुठन्ती
शिशिरयतु दृशौ मे सा स्रवन्ती कदा वा ॥

अत्र गङ्गेति वक्तव्ये हरिचरणनख-किरणधवलपूरवाहिनी इति अभिधेयस्य प्रौढित्वरूपः ओजः दर्शितम् ।

काव्यशोभाकराः शब्दार्थालङ्काराः बहवः अत्र निबद्धाः उपमा, रूपकम्, उत्प्रेक्षा, श्लेषः, अतिशयोक्तिः अर्थान्तरन्यासः इत्यादयः । एवमेव अस्मिन् काव्ये कविसमयप्रसिद्धानि नगरार्णवशैलर्त्वादीनि वर्णनानि समुल्लसन्तितराम् । समुद्रः, गौकर्णक्षेत्रे भगवान् महाबलेश्वरः, हस्तिदन्तनिर्मितम् आधुनिकशिल्पकलावैभवयुतं लोकोत्तरं मठीयं सिंहासनम्, योगपट्टोत्सवः, वसन्तर्तुः, वर्षर्तुः, सूर्योदयः, उडुपिक्षेत्रे कृष्णमूर्तिः, हैममण्डपाधिरूढा श्रीराममूर्तिः, काशी, गङ्गा.... इत्यादीन् प्रासङ्गिकतया तत्र तत्र यथाप्रतिभमुपावर्णयदसौ कविः। येषां च कारणादेवेदं काव्यं महाकाव्यपदं कविश्चायं महाकविपदवीमारोढुं अर्हौ स्याताम् इति दृढं मन्यते अयं जनः ।

श्रीमच्छङ्कराचार्याणां वैशिष्ट्यवर्णनं प्रथमे तरङ्गे दिङ्मात्रदर्शनार्थं यथा -

द्राक्षेक्षुदुग्धमधुसन्निभवाक्प्रवाहैः
अध्यात्मसुन्दरसुधार्णवसृष्टिकर्ता ।
संसारदुर्भरदुराशयदग्धचित्तान्
सञ्जीवयत्यनुकलं दहरेशयस्सः ॥(पृ.२)

गोकर्णवर्णनं प्रथमतरङ्गे (५-६ पृष्ठयोः) । तत्र समुद्रवर्णनं यथा -

उल्लोललोलशफरौघसहस्रनेत्रः
स्वान्तर्निलीनविमलाम्बरशुभ्रगात्रः ।
स्वाधीनजीवननदीशतसत्कलत्रो
यत्रोदधिर्लसति कोऽपि पुमान् विचित्रः ॥
आत्मम्भरिर्निदनदीविमलाम्बुपूरैः
पाणिन्धमो धवलफेनतरङ्गसङ्घैः ।
कुक्षिम्भरिर्विपुलरत्नसशुक्तिशङ्खैः
अम्भोनिधिर्जयति जीवनमालभारी ॥

द्वितीये तरङ्गे दशाधिकैः मन्दाक्रान्तानिबद्धैः पद्यैः हस्तिदन्तसिंहासनं चारुतया वर्णितं यच्च निखिलविमर्शकवृन्देन. ऐककण्ठ्येन प्रशंसापात्रतामभजत । तत्रत्येषु पद्येषु दिङ्मात्रं यथा (पृ..२५-२६)

ताराश्रेणीपुलकितनभः श्रीविशिष्टेन्दुबिम्बं
बालार्कांशुच्छुरितललितं किं नु शृङ्गं सुमेरोः ।
भाभाति स्म प्रचुरमणियुक् किं नु कूटं हिमाद्रेः
शोभाशालिद्विरदरदनोट्टङ्कितं सिंहपीठम् ॥
यत्रोत्कीर्णो निशितशरसङ्घातसार्द्रक्षताङ्गो
वृद्धो भीष्मो रणभुवि शरव्राततल्पे शयानः ।
व्यस्तं पुस्तं किमु समरशौर्यानुबन्धप्रशस्ति
व्यस्तं प्राज्यमितरगुणप्रापकं व्यासपीठे ॥

यत्रार्धेन्दुप्रतिमफलकन्यस्तपाञ्चालिकानां
श्रेणिः सीतारमणविजयश्रीधृता दर्पणीव ।
यत्राधस्तात्किमु कुरुपतेः सैन्यदुर्धर्षपार्थ-
प्रोद्यच्चापोच्चलदिषुजयाशंसिनी वीरलक्ष्मीः ॥

चतुर्थतरङ्गे वर्षर्तुवर्णनवैखरी यथा (पृ. ४५, ४६)

सलिलभरतटाकप्रान्तनिष्क्रान्तभेका
विपिनविटपिशाखातल्पविश्रान्तकाका ।
गिरिनिकटनिपानोपान्तजाग्रज्जलूका
प्रकटबहुविलासा भाति वर्षावधूटी ॥
सलिलमखिलमुस्त्रैश्चोरयित्वापगानां
हरिततरुलतादीन्निर्दयं शोषयित्वा ।
क्व नु गत इति भानुं विद्युदुल्कासहस्त्रैः
पिहितनिजशरीरं प्रावृडाक्रामतीव ॥

सरलस्यापि सुन्दरस्य, प्रौढस्यापि आकर्षकस्य, आधुनिकस्यापि संप्रदायबद्धस्य, अभिनवस्यापि न अपाणिनीयकस्य, सर्गसंख्यया लघुनोऽपि काव्यगुणैर्महतः, सालङ्कारस्य, असंक्षिप्तस्य, निरन्तररसभावस्य, श्रव्यवृत्तस्य, श्लाध्यवस्तुनः महाकाव्यस्यास्य अनितरसाधारणं सौन्दर्यं वैशिष्ट्यं महिमानं प्रभावं च परिमितैः निमेषैः निरूपयितुं न खलु सुलभसाध्यम् । अभिनवमहाकाव्येषु अद्वितीयं स्थानम् अस्य काव्यस्य विद्यते । साधुचरित-वर्णनेन साधारणजनान् साधुमार्गं बोधयति गीर्वाणवाणीप्रणयी गुरुभक्तिविनताननो कर्णाटकविभास्करःभूसुरः श्रीभास्करभट्टः । कविवरस्यास्य काव्यरत्नस्य परिचयोद्देशकोऽयं विमर्शरूपो निबन्धः स्वोद्देश्यपूरणे कियान् सफल इत्यत्र सहृदयाः प्रमाणम् । प्रस्तावनायाः पद्यमेकं स्मरणयोग्यं वर्तते अत्र-

गुरुकरुणामृतजातं गुणसौरभरीतिकान्तवर्णपदम् ।
भास्कर-कर-सम्भिन्न कमलमिवोद्भासितं काव्यम् ॥

# दशमं मिलनं यावत्...

दशमं विश्वसंस्कृतसम्मेलनम् आगामिनः १९९७ तमस्य ख्रिस्तवर्षस्य जनवरिमासस्य तृतीयदिनात् आरभ्य नवमदिनपर्यन्तं कर्णाटकस्य राजधान्यां कल्याणनगरीति प्रसिद्धायाम् उद्याननगर्यां **बेङ्गलूरु** नगर्यां सम्पत्स्यते इति सर्वे विदन्ति । तरळबाळुकेन्द्रस्य डॉ. शिवमूर्तिस्वामिनाम् आश्रये अन्ताराष्ट्रियसंस्कृताध्ययन-सङ्घस्य तत्त्वावधाने जागतिकस्तरीयं महत्कार्यमिदं भविष्यति । यद्यपि इदं दशमं विश्वमिलनम् इतः प्रायः पञ्चाशद् वर्षेभ्यः पूर्वमेव अस्य मूलमन्वेष्टव्यं द्रष्टव्यं चेति चेतो मे मन्यते । अतः पञ्चाशद्वर्षेभ्यः दिशायामस्यां किं किं समभूदिति विहगावलोकनं विधास्यामः ।

स्वातन्त्र्यप्राप्तेः समनन्तरमेव अर्थात् १२-११-१९४७ तमे दिवसे **सरदार वल्लभभाई पटेलमहोदयाः** इतिहासप्रसिद्धस्य सोमनाथमन्दिरस्य पुनरुद्धारं प्रतिज्ञातवन्तः । तदनु सौराष्ट्रप्रशासनं 'सोमनाथ ट्रस्ट्' नाम्नीं विश्वस्तसंस्थाम् अस्थापयत् । भारतीय-संस्कृतेः संस्कृतस्य इतिहासस्य कलादीनाम् अध्ययन-अनुसन्धान-प्रचार-प्रसारादीनि संस्थायाः उद्देश्यानि अभूवन् ।

भारतीयविद्याभवनस्य संस्थापकाः **डॉ. कन्हैयालाल माणिकलाल मुनशी** महोदयाः सोमनाथ-विश्वस्त-संस्थायाः सहकारेण ११-५-१९५१ तमे दिने प्रभासपत्तने राष्ट्रपतेः डॉ. गजेन्द्रप्रसादस्य अमृतहस्तेन कृते ज्योतिर्लिङ्गस्य पुनः प्रतिष्ठापनमहोत्सवावसरे संस्कृत-विदुषाम् अनुरागिणां च एकं सम्मेलनं समायोजयन् यत्र च संस्कृतस्य सर्वतोमुखाभिवृद्ध्यर्थं **''संस्कृत विश्वपरिषत्''** स्थापिता ।

ततः संस्कृतविश्वपरिषत् १९५२ तमे वर्षे काशीक्षेत्रे, १९५४

तमे वर्षे नागपुरे, १९५५ तमे तिरुपतिक्षेत्रे, १९५७ तमे वत्सरे कुरुक्षेत्रे, १९५९ तम संवत्सरे जगन्नाथपुर्याम्, १९६१ तमेऽब्दे मुम्बईनगरे तथा १९६६ तमे खिस्तहायने **बेङ्गलूरुनगरे** इति क्रमशः अष्टौ अधिवेशनानि समायोजयत् । संस्कृतविश्वपरिषदः प्रेरणयैव भारतीय विद्याभवनं सरलसंस्कृतपरीक्षाः, गीतापरीक्षाः इत्यादिकाः समारभत याः अद्यापि प्रचलन्ति ।

संस्कृतविश्वपरिषदः कार्यक्रमाणां परिणामतः एव आकाशवाण्यां संस्कृत-वार्ताप्रसारः, संस्कृतदिवस समाचरणमित्यादिकमप्यभूत् । एवमेव केन्द्र-संस्कृतमण्डली ततश्च संस्कृत-आयोगः विरचितौ अभूताम् । १९५६ तमे वत्सरे संस्कृतायोगस्य प्रणिगदनं प्रशासनाय समर्पितम् । तदनु केन्द्रप्रशासनं संस्कृतोन्नत्यर्थं कांश्चन उपक्रमान् अकरोत् केन्द्रीयसंस्कृतविद्यापीठानां संस्थापनमपि यत्र अन्तर्भवति ।

१९७१ तमवर्षे **'राष्ट्रियसंस्कृतसंस्थानम्'** स्वायत्त संस्थारूपेण केन्द्रप्रशासनेन समारब्धं यस्य च निर्देशकपदं परमसमान्यैः (इदानीं दशम विश्व संस्कृतसम्मेलनस्य आध्यक्ष्यम् अलङ्कुर्वाणैः) **डॉ. रामकरण शर्ममहोदयैः** अलङ्कृतम् ।

१९७२ तमे संवत्सरे राष्ट्रिय-संस्कृत-संस्थान द्वारा भारतस्य केन्द्रप्रशासनं **देहल्याम्** अन्ताराष्ट्रियस्तरीयं संस्कृत-सम्मेलनमेकम् आयोजयत् । अस्मिंश्च प्रथमे जागतिकमिलने संस्कृतसम्बद्धाः सर्वसमस्याः चर्चिताः अभूवन् । संस्कृत-अध्ययन-अनुसन्धानयोः कृते विश्वस्तरे कोऽपि समवायः आरचनीय इत्यपि निर्णीतोऽभूत् । ततश्च १९७३ तमवर्षे **प्यारिसनगरे** समायोजिते प्राच्यविद्यापारङ्गतानाम् अन्ताराष्ट्रियमिलने (International Congress of Orientalists) संस्कृतस्य कृते एकः नूतनः सङ्घः समारब्धः अन्ताराष्ट्रिय-संस्कृताध्ययन-सङ्घः (International Association of Sanskrit

Studies) इति नाम्ना यस्य च अध्यक्षाः डॉ. **वि. राघवन्** तथा प्रधान कार्यसचिवाः **डॉ. लुड्विक् स्टर्नबाक्** च अभवन् । अस्य केन्द्रकार्यालयः इटलीदेशस्य टोरिनो नगरे स्थापितः ।

वर्षत्रये सकृदिति मनीषया, देहलीनगरे १९७२ तमवर्षे आयोजितं सम्मेलनं प्रथममिति परिगणय्य च, तदनन्तरं सोऽयं समवायः १९७५ तमेऽब्दे **टोरिनो**नगरे द्वितीयं विश्वसंस्कृतसम्मेलनं समायोजयत् । ततः क्रमेण १९७७ तमे **प्यारिस**नगरे, १९७८ तमे जर्मनीदेशस्य **वैमार्** नगरे, १९८१ तमे **वाराणस्यां**, १९८४ तमे अमेरिकायाः **फिलेडेल्फिया** नगरे, १९८७ तमे वर्षे नेदरल्याण्डदेशस्य लैडन् नगरे, १९९० तमे आस्ट्रिया देशस्य **वियेन्ना** नगरे, १९९३ तमे वर्षे आस्ट्रेलिया देशस्य **मेलबोर्न** नगरे इति नव अधिवेशनानि आयोजितानि ।

दशममिदानीं विश्वसंस्कृतसम्मेलनं भारतदेशे तृतीयवारं, कर्णाटकस्य राजधान्यां बेङ्गलूरुनगर्यां प्रथमवारं, १९९७ तम वर्षस्य जनवरिमासस्य तृतीयतः नवमदिनाङ्कपर्यन्तम् आयोजितमस्ति । प्रथम-विश्वसम्मेलनस्य प्रधान सूत्रधाराः डॉ. **रामकरण शर्म**महोदया एव अधुना अध्यक्षस्थानं वहन्तीति सन्तोषस्य स्थानम् । भारतस्य स्वातन्त्र्यप्राप्तेः पञ्चाशत्तमे वर्षे, अन्ताराष्ट्रिय-संस्कृताध्ययन-सङ्घस्य रजतोत्सवावसरे च दशममिदं विश्वमिलनं बेङ्गलूरुनगरे भविष्यति । सप्ताहावधिकेऽस्मिन् ज्ञानसत्रे संस्कृतनवनीतम् अपेक्षित-प्रमाणेन मथितं भविष्यतीति दृढमहं विश्वसिमि ।

**देशभाषा तु भूषावदेकदेशविलासिनी ।**
**वस्त्रवद् देवभाषा तु सर्वदेशविहारिणी ॥**

**॥ जीयात् गीर्वाणभारती ॥**

# इतिकर्तव्यतास्माकम्

भारतदेशस्य स्वाधीनतायाः सुवर्णोत्सववर्षम् अनुलक्ष्य बहवः कार्यक्रमाः बहुभिः समायोजिताः समायोज्यमानाश्च वर्तन्ते । संस्कृतपत्रकाराः अपि किमपि चिकीर्षन्ति । परं किमस्माभिः कर्तुं शक्यते इति विषये विचारः नाधिकं कृतः । बहवः केवलं नैराश्यमापन्नाः अथवा किंकर्तव्यविमूढाः संलक्ष्यन्ते । स्वस्वपत्रपत्रिकाणां जीवनमरणसङ्घर्षे एव व्यर्थीकृतसर्वस्वाः संस्कृतपत्रकाराः दीर्घं द्रष्टुमपि न प्रभवन्तीति वर्तमाना वस्तुस्थितिः । अतः अस्मिन्नवसरे गम्भीरः कोऽपि विचारः अवश्यं कर्तव्य इति मनीषया स्वाभिप्रायान् प्रकटयितुं प्रयततेऽयं जनः ।

यथा सर्वे विद्वांसः विदन्ति भारतदेशे पत्रिकाः देशहितार्थं, लोकोद्बोधनार्थं, भाषा-साहित्य-संस्कृतीनां संरक्षणार्थं, स्वातन्त्र्यसमरार्थं, देशस्य एकतां समग्रताम् अखण्डतां परिरक्षितुमपि समारब्धाः देशभक्तैः लोकोपकारप्रवणैः विद्वद्भिः मनीषिभिरिति । समेषां जनानां कारणानां परिस्थितीनां परिणामतः पञ्चाशद्भ्यः वर्षेभ्यः पूर्वं स्वातन्त्र्यं समवाप्तमेव अस्माभिः । एवं योगः लब्धः क्षेमम् अवशिष्टम् ।

स्वातन्त्र्यं स्वत एव सिद्धिः नास्ति । सिद्धीनां कृते प्रथमं साधनमात्रमेव तत् । यदर्थं स्वातन्त्र्यमपेक्षितमासीत् तत्तु अद्यापि दूर एव आस्ते । लब्धस्वातन्त्र्यैः प्रजाबन्धुभिः सर्वजनानां हितं साधनीयम् । सर्वजनहिताय सर्वजनसुखाय अथवा 'लोकाः समस्ताः सुखिनो भवन्तु' इति मनीषया अधुना सर्वैः प्रयतनीयम् । अस्मिन् महोद्यमे संस्कृतपत्रकाराणामपि अस्त्येव काचिदितिकर्तव्यता । अस्माकं समस्याः यद्यपि प्रमुखाः गभीराश्च वर्तन्ते न खलु ताः सर्वाः अपरिहरणीया इत्येव मे मतम् । यदि अस्माभिः लोकहितमाचर्यते लोकः अस्माकं रक्षणं वर्धनं

स्वयं स्वहितार्थमेव कुरुते इत्यत्र नास्ति संशयलेशस्यापि अवसरः। अतःकृत्वैव प्रथमं लोकहितार्थं यद्वयं कर्तुं प्रभवामः तच्चिन्तयामः।

गतकाले अधुना आगामिनि च काले संस्कृतस्य संस्कृतपत्रिकाणां च स्वीयं किमपि विशिष्टं कृत्यम् आसीत् अस्ति भविष्यत्येव इति मन्यमानेषु अन्यतमोऽहं संस्कृतविदुषां पत्रकाराणामपि पुरस्तात् दिङ्मात्रप्रदर्शनार्थं कार्यजातं स्थापयितुमिच्छामि। 'क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे' इति विचारे दत्तचित्तः स्थितस्थिरविश्वासोऽहं किमपि कृत्यम् असम्भवमिति न खलु मन्ये। भवन्तः सर्वेऽपि कृपया विचारयन्तु इमान् विचारकणान् इत्येव मे अभ्यर्थना-

१. समाचारः (Information) सद्बोधनम् (Education) मनोरञ्जनम् (Entertainment) इति हि समस्तपत्रिकाणां प्राथमिकं ध्येयम्। स्वस्वग्राहकबन्धूनां कृते आवश्यकीं सामग्रीं यथाकथमपि प्रदातुं यावदपेक्षितः प्रयत्नः संस्कृतपत्रकारैरपि विधेयः। संस्कृतक्षेत्रे किं किं चलति इति अद्ययावत्कं ज्ञानं संस्कृतज्ञेभ्यः संस्कृतच्छात्रेभ्यः संस्कृतानुरागिभ्यः प्रापयन्तु संस्कृतपत्रिकाः समीचीनतया।

२. संस्कृतलेखकेभ्यः स्वसाहित्यप्रकटनार्थं प्रचारार्थं च नितराम् अभीप्सिततमा वेदिका पत्रिकामाध्यमेन उपस्थापयितुं शक्यते। स्व-स्व-प्रदेशीयान् संस्कृतलेखकान् प्रकाशयितुं प्रोत्साहयितुं लेखनव्यवसायं संरक्षितुमपि संस्कृतपत्रिकाः प्रयतन्ताम्।

३. प्रादेशिकभाषाणामाधारेण राज्यविभागः पुनर्व्यवस्थापितः। अनेन प्रादेशिकभावनाभ्यः साहाय्यं प्राप्तम्। संस्कृतं न कस्यापि प्रदेशस्य परं सर्वप्रदेशानामपि। पञ्चसहस्रवर्षेभ्यः यथा प्रदेशसीमानमतिक्रम्य राष्ट्रिया भावना संस्कृतभाषा—साहित्यमाध्यमेन संरक्षिता संवर्धिता तथा अधुनापि विशेषरूपेण अधिकप्रमाणेन चैतत्कार्यं

संस्कृतं संस्कृतं केवलं कर्तुं प्रभवति । तत् पत्रिकामाध्यमेन सिध्यति एव ।

४. यथा संस्कृतभाषासाहित्यं प्रादेशिकभाषासु अवतीर्णं तथा प्रादेशिकभाषासाहित्यमपि संस्कृतभाषान्तररूपेण निखिलं देशं प्राप्तुं प्रभवति । संस्कृतज्ञैः कृतं तादृशं अनुवादम् इतरप्रदेशीयाः स्वस्वभाषासु अनूद्य भारतसाहित्यं पोषयितुं प्रभवन्ति । आंग्लभाषातः इदानीम् ईदृक् कार्यं विधीयते यच्च असमर्पकं नाधिकं च । संस्कृतज्ञाः पत्रिकामाध्यमेन प्रादेशिकं साहित्यं सार्वत्रिकं कर्तुं प्रयतन्ताम् ।

५. सर्वाभ्यः प्रादेशिक-भाषाभ्यः शब्दसम्पदं दातुं संस्कृतस्य शक्तिरस्ति । प्राचीनान् सामयिकांश्च साधून् शब्दान् उद्धृत्य व्युत्पाद्य उपयुज्य विवृत्य व्याख्याय च भाषासमृद्धिं साधयितुं, संस्कृतविद्वांसः यतन्ताम् । पारिभाषिकाः वैज्ञानिकाः आधुनिकाः सामयिकाः शब्दाः संस्कृतमाध्यमेन निखिले देशे मानिता भवितुमर्हन्ति ।

६. संस्कृतं सुष्ठु न जानद्भिः स्वदेशीयैः विदेशीयैरपि बहूनि अपव्याख्यानानि अन्यथाव्याख्यानानि विहितानि विधीयमानानि च वर्तन्ते । संस्कृतज्ञाः साधारं तानि खण्डयित्वा भारतीयं युक्तं व्याख्यानं प्रदातुं प्रभवन्ति । इदं संस्कृति-संप्रदाय-सदाचार-सद्विद्यासम्बद्धं ज्ञानविशेषं प्रापयितुं प्रयत्नम् अन्यः कः कथं वा कुर्यात्? वयमपि न कुर्मश्चेत् तदा कथं स्यात् इति विचिन्त्यताम् ।

७. अखिलभारतस्तरे केवलं संस्कृतक्षेत्राश्रितं विज्ञापनं किमपि भवत्येव । पुस्तकानां प्रकाशनम्, सभा-सम्मेलन-समारम्भादीनां विज्ञापनम्, शालाप्रवेशादीनां समाचारः, संशोधन-अनुसन्धानविषये सूचनाः, संस्कृतपुरस्काराणां विचारः, पारितोषिकाणां स्पर्धानां वा वार्ताः, परीक्षापरिणामाः, अन्यान्यशैक्षणिक-योजनाविचाराः

इत्यादीत्यादीनां प्रचारः संस्कृतपत्रिकामाध्यमेन कर्तुं शक्यते ।

८. अन्यान्यक्षेत्रेषु विद्यमानानां विदुषां लेखकानां प्रवाचकानां विशेषज्ञानामपि परिचयः परस्परं पत्रिकामाध्यमेन कर्तुं शक्यते । यद्यपि एकस्मिन्नेव कार्ये बहवः निरताः तथापि परस्परपरिचयाभावात् अज्ञानादपि कार्याणां पुनरुक्तिः प्रयासस्य वैयर्थ्यं परिणामस्य अल्पत्वमपि जायमानमस्ति । यत्तु आहत्य कर्मकरणेन अन्यथाकर्तुं सार्थकं विधातुमपि शक्यते पत्रिकामाध्यमस्य साहाय्यात् ।

९. भारतीयसंस्कृतेः संरक्षणं संस्कृतभाषयैव विहितम् । संस्कृतकाव्यनाटकादीनां प्रचारेण सङ्गीतस्य शिल्पादीनां प्रचारेण च इदं वर्धयितुं शक्यते । भारतीयसंस्कृतेः महिमानं वैशिष्ट्यं च उद्बोधयितुं लेखाः ग्रन्थाः पत्रिकाद्वारा शक्यक्रियाः ।

१०. संस्कृतकविभिः विरचितं मौलिकम् आधुनिकं च साहित्यं धारारूपेण पत्रिकासु प्रकटय्य ततः च पृथक् ग्रन्थरूपेण प्रकाशयितुं शक्यते । अनेन अल्पमूल्येन अधिकं कार्यजातं सम्पाद्यते । अर्वाचीनसाहित्यस्य कृते पत्रिकाणां साहाय्यम् अत्यधिकं वर्तते ।

११. अनुसन्धानस्य योजनाः तेषां परिणामाश्च पत्रिकामाध्यमेन व्यापकं प्रचारम् उपयोगितां च प्राप्तुं प्रभवन्ति सारसङ्कलनद्वारा ।

१२. संस्कृतभाषायाः साहित्यस्य च अभिवृद्धये अद्यत्वापादनार्थं च (Updating Sanskrit language and literature) पत्रिकाः प्रभवन्ति । संस्कृते आधुनिकं सकलं ज्ञानं प्रदेयम् । नूतनाः शब्दा अपि तदर्थं व्युत्पाद्याः । अन्यथा संस्कृतभाषा गतकालीना तिष्ठति । जीवन्तीं इमां विधातुं नूतनाविष्काराः अवश्यं प्रवेशनीयाः अत्र ।

१३. इतरभाषापत्रिकासु केचन कार्यक्रमाः कानिचन विशिष्ट-

लेखा: न खलु प्रकाशं प्राप्नुवन्ति । तादृशा: लेखा: केवलं संस्कृताश्रिता: संस्कृतनिष्ठा: संस्कृतपत्रिकामाश्रित्य जीवन्ति । शास्त्रीया: अपि चर्चा: संस्कृतपत्रिकास्वेव प्रवेशमीहन्ते ।

१४. केषाञ्चन विशिष्टकार्याणां प्रणिगदनानि विस्तृत-विवरणानि, इतिवृत्तानि संरक्षणार्थं तथैव भविष्यतां जनानाम् उपयोगार्थं संस्कृतपत्रिकासु स्थिरीकरणम् अर्हन्ति । आवश्यकानां प्रशासनादेशानां मुद्रणं प्रचारश्च पत्रिकामाध्यमेन कर्तव्य: वर्तते ।

१५. संस्कृतज्ञानां सङ्घटनार्थं पत्रिका उपयुक्तं माध्यमं भवति । निखिले देशे संस्कृतस्य वार्तकेन्द्ररूपेण समाचारकोशरूपेण संस्कृतपत्रिका स्वकृत्यं कर्तुं प्रभवति । अन्यान्य-सङ्घसंस्था: स्वीयानां कार्याणां प्रकाशनार्थं पत्रिकासाहाय्यं कर्तुं परस्परं श्रेय: प्राप्तुं प्रभवन्ति ।

संस्कृतपत्रिकाणां प्रमुखा: समस्या: चतस्र एव । ग्राहका: न सन्ति । विज्ञापनप्रदातार: न भवन्ति । लेखका: न लभ्यन्ते । प्रकाशनव्यवसाये धनं नास्ति इति । परमेता: परिहर्तुं शक्यन्ते । ग्राहकेभ्य: यत् अपेक्षितम् आवश्यकम् उपयुक्तं तादृशसाहित्यसामाचार- प्रकाशनेन ग्राहका: वर्धन्ते । प्रादेशिक-शासनानि स्वाधीनशालाभ्य: ग्राहकत्वशुल्कं स्वयं चेत् प्रयच्छन्ति इयं परिहृता भवति समस्या । संख्यायां वृद्धिं गतायां प्रकाशनानुदानेन च निश्चयेन समस्या परिहृता स्यात् । लेखकानां सम्पर्केण नियतरूपेण साधुरीत्या पत्रिकाप्रकाशनेन लेखकानां समस्यां परिहर्तुं शक्यते । योग्यसम्पादकानां हस्ते प्रकाशनकर्म कठिनं नास्ति । अद्यत्वे विज्ञान-तन्त्रज्ञानानां प्रगत्या मुद्रणं समस्या नास्ति । सम्पादक: समर्थ: स्वतन्त्र: निष्ठ: गम्भीरश्च यदि भवति सर्वा: समस्या: स्वयं परिहृता: भवन्ति । यथा अयं जन: मनुते योग्यानां सम्पादकानाम् अभाव एव

संस्कृतपत्रिकाणां प्रधानं निदानं च समस्या आस्ते । बह्व्यः पत्रिकाः ग्राहकार्थं न सन्ति परं सम्पादकानां कृते, विज्ञापनानां कृते, कुतूहलतर्पणार्थं केवलं सन्तीति प्रतिभाति । यदि अवश्यं पत्रिकामाध्यमं समाजहितार्थमेव उपयुज्यते तदा सत्यमेव उद्दिष्टं सम्पत्स्यते । केवलं रोदनेन दोषाविष्कारेण पाण्डित्यप्रदर्शनेन अथवा मनोरथेन न किमपि कार्यं सम्पद्यते । चतुर्भिः मिलितैः असाध्यं साध्यं भवति । यदि संस्कृतज्ञा अपि सम्मिलिताः न किञ्चिदसाध्यम् अवशिष्यते इति शम् ॥

* * *

## *Books By Dr. B. S. Ramakrishna Rao*

### SANSKRIT

| | | |
|---|---|---|
| 1. | [illegible] | 25-00 |
| 2. | [illegible] | 20-00 |
| 3. | गद्यरत्नमञ्जूषा | 30-00 |
| 4. | सुभाषितसमुच्चयः (संग्रहः) | 15-00 |
| 5. | हास्यमधुबिन्दवः (हास्यलघुकाः) | 10-00 |
| 6. | तिलोत्तमा (अनुवादः) | 5-00 |
| 7. | निबन्धनवनीतम् (सहलेखनम्) | 12-00 |
| 8. | रसहृदयतन्त्रम् (सहसम्पादनम्) | – |

### KANNADA

| | | |
|---|---|---|
| 9. | ಸಂಸ್ಕೃತ ಪ್ರಚಾರಕ್ಕೆ ಕೆಲವು ರಚನಾತ್ಮಕ ಸಲಹೆಗಳು | – |
| 10. | ಸೂಕ್ತಿ ರತ್ನಗಳು | – |
| 11. | ಆಧುನಿಕ ಸಂಸ್ಕೃತ ಸಾಹಿತ್ಯಕ್ಕೆ ಕರ್ನಾಟಕದ ಕೊಡುಗೆ | 20-00 |
| 12. | ಭಾರತೀಯ ವಿದ್ಯೆ (ಅನುವಾದ) | 9-00 |
| 13. | ಸಂಸ್ಕೃತ : ಭಾಷೆ ಮತ್ತು ಸಾಹಿತ್ಯ (ಸಹಲೇಖನ) | 12-00 |
| 14. | ಸಂಸ್ಕೃತ ಪತ್ರಿಕೋದ್ಯಮ (ಸಂಪಾದಿತ) | 25-00 |
| 15. | ಮಹಾಭಾರತದ ಮೂಲಕಥೆ ಮತ್ತು ಮುಖ್ಯ ಪಾತ್ರಗಳು (ಅನುವಾದ) | 25-00 |
| 16. | ಗೀತಾ ಪಾಠಾವಳಿ (ಭಾಗ-೧) (ಅನುವಾದ) | 30-00 |
| 17. | SARALA SAMSKRITA SHIKSHAKA (Parts 6, 7 & 8) English Translation | 30-00 |

### OTHERS

Edited many journals, souvenirs a[illegible] books

Written a number of articles in E[illegible]

Kannada and Sanskrit.